# नीतिदीपिका ।

सर्व्वदर्शनाचार्य्य-
श्रीताराचरणशर्म्मणा विरचिता ।

स्वस्तिश्रीविविधविरुदावलीविराजमानमानोन्नत-
महाराजाधिराजद्विजराजकाशिराज-
श्री ५ मत् प्रभुनारायणसिंहशर्म्म-
वीरपुङ्गवस्याज्ञया ।

तदीयसभापण्डितवर-
ग्रन्थकृदात्मज
श्रीप्रियनाथतत्त्वरत्नेन प्रकाशिता ।

काशीधाम्नि
भारतजीवनयन्त्रालये
श्रीरामकृष्णवर्म्मणा मुद्रिता ।

सम्वत् १९४६ ।

# सूचीपत्रम् ।

इति ।




॥ श्रीकाशी ॥

# नीतिदीपिका ।

श्रीगणेशायनमः ॥

राजराजेश्वरं देवं सोममूर्त्तिं परात्परम् ।
काशीश्वरं गुरुं नत्वा क्रियते नीतिदीपिका ॥१॥

जयत्यसौ काशिनरेशईश्वरी-
प्रसादनारायणशर्म्मकेशरी ।
यमाश्रिता काशिपुरी पुरातनी
प्रबोधविद्यानगरी विराजते ॥ २ ॥

देवतीर्थमुनिर्नामा सम्प्रज्ञातसमाधिमान् ।
शिवमूर्त्तिरवोचद्यं नीतिसारं महामतिम् ॥ ३ ॥

तस्योपदेशमाकर्ण्य व्यवहारं विलोक्य च ।
यथाज्ञानमुपेत्यार्थान् विज्ञाय मुनिसम्मतिम् ॥ ४ ॥

भुक्त्वा च सकलां गोष्ठीं प्रायशस्तत्प्रसङ्गिभिः ।
विलोक्य नृपकार्य्याणि प्रकृतेर्भावदृष्टिमान् ॥ ५ ॥

श्रीसीतानाथसम्भूतो वशिष्ठकुलसम्भवः ।
भट्टपल्लीग्रामजन्मा श्रीताराचरणद्विजः ॥ ६ ॥

काशिराजात्मजं धीरं युवराजं महामतिम् ।
प्रभुनारायणं नाम्ना नीतितत्त्वं प्रभाषते ॥ ७ ॥

### शास्त्रार्थविभागः ।

राजा मन्त्री बलं दुर्गमन्नं कोषस्वरः प्रजाः ।
अस्मिन्नेव महासंघे नीतिविद्या प्रवर्त्तते ॥ १ ॥
राजा जीवो मनो मन्त्री बलं बलमुदीर्य्यते ।
दुर्गमायतनं विद्यादन्नं सर्व्वस्य पोषणम् ॥ २ ॥
कोषः सारस्वरश्चक्षुः प्रजाचरणरूपिणी ।
एतदेव महाराज्यं नीत्यधिष्ठानमुच्यते ॥ ३ ॥

### राजस्वरूपम् ।

परमात्मा प्रजाः सृष्ट्वा रन्तुं तत्र स्वमायया ।
राजरूपेण लोकेषु प्राप्तवान् मानवीं तनुम् ॥ १ ॥
सर्ज्जनाद् यागपूजाद्यैः पालनान्नीतिवर्त्मना ।
संहाराद् दण्डरूपेण ब्रह्मा विष्णुः शिवो नृपः ॥ २ ॥
इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्राभिर्निर्म्मितो नृपः ॥ ३ ॥
यस्मादेषां नरेन्द्राणां मात्राभ्यो निर्म्मितो नृपः ।
तस्मादभिभवत्येष सर्व्वभूतानि तेजसा ॥ ४ ॥
यत्नेन तोषिता देवा राजरूपेण साधकान् ।
प्रापयन्तीप्सितान् भोगान् सर्व्वदेवमयः स तत् ॥५॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ६ ॥

यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्व्वतेजोमयो हि सः ॥ ७ ॥
विषं तीक्ष्णं नृपस्तीक्ष्णो विषात्तीक्ष्णतरो नृपः ।
विषमेकाकिनं हन्ति राजा हन्ति कुलैः सह ॥ ८ ॥
यदि राजमयो लोके न तिष्ठेत् कल्पपादपः ।
कस्य च्छायां समाश्रित्य शान्तिमिच्छेन्नरः सदा ॥ ९ ॥
स्वे स्वे धर्म्मे निविष्टानां सर्व्वेषामनुपूर्व्वशः ।
वर्णानामाश्रमाणाञ्च राजा सृष्टोऽभिरक्षिता ॥१०॥
एष एव तपो यज्ञश्चतुर्व्वर्गप्रदस्त्वसौ ।
एष एव महापङ्के निमज्जयितुमीश्वरः ॥ ११ ॥
सत्यादियुगसञ्ज्ञानां राजैव सम्प्रवर्त्तकः ।
राजैव परमो देवो लोके ज्ञेयो न चापरः ॥ १२ ॥

राजविभागः ।

राजा चैव महाराजो राजराजस्तदीश्वरः ।
सम्राड़िति विजानीयाद् भेदान् पञ्चमहीभृताम् ॥१॥
रञ्जनाल्लोकसङ्घानामङ्गानां परिरक्षणात् ।
दण्डार्थनीतिसम्पन्नः प्रथमः परिकीर्त्यते ॥ २ ॥
विषये लक्षदो यस्य महाराजः स उच्यते ।
तिष्ठेयुर्यद्वशे भूपा राजराजः स कीर्त्तितः ॥ ३ ॥
एते यस्य वशीभूता राजराजेश्वरो हि सः ।
सर्व्वभूमीश्वरो यः स्यात्स सम्राड़िति गीयते ॥ ४ ॥

भेदान्तराणि ।

सुहृन्मित्रमुदासीनः सामन्तो रिपुपञ्चमः ।
एवं राजविभेदेन नृपतिः पञ्चधा मतः ॥ १ ॥
येन प्रीतिमता राज्ञा व्यवहारः प्रवर्त्तते ।
नियमेन समो भूत्वा स सुहृत्परिकीर्त्त्यते ॥ २ ॥
दुःखि दुःखी सुखि प्रीतो नियमापेक्षयोज्झितः ।
आत्मवत् प्रीतिसंयुक्तः स मित्रमभिधीयते ॥ ३ ॥
न सुखि सुखमाप्नोति न दुःखि भजतेऽसुखम् ।
व्यवहारमकुर्व्वाण उदासीनः प्रकीर्त्त्यते ॥ ४ ॥
सामदानाद्युपायेन हीनवीर्य्यतयाऽपि वा ।
योऽधीनः कुरुते कार्य्यं स सामन्त उदीरितः ॥ ५ ॥
यः सदा निष्टमाधातुं क्रियावाङ्मनसा रतः ।
सुखी दुःखि सुखि दुःखीरिपुरित्यभिधीयते ॥ ६ ॥
व्यवहारात् स्वभावाद्वा कार्य्याद्वा भीतितोपि वा ।
सुहृन्मित्रादिभावोऽयं जायते धरणीभृताम् ॥ ७ ॥
सन्निकर्षैकभोग्यत्वजिगीषाद्यैर्महीभृताम् ।
प्रायशो जायते वैर इतराणि स्वकारणात् ॥ ८ ॥

पुनर्भेदान्तराणि ।

धीरोदात्तोद्धतौ द्वेधा स्याद्धीरललितस्तथा ।
धीरप्रशान्त इत्येवं चतुर्धा नृपतेर्भिदा ॥ १ ॥

अनात्मश्लाघया युक्तो गम्भीरः क्षमया युतः ।
हर्षशोकभयादीनानभिभूतः स्वभाववान् ॥ २ ॥
विनयच्छन्नगर्व्वश्च स्वाङ्गीकृतकरः स्थिरः ।
धीरैर्वीरगुणोपेतो धीरोदात्तः प्रकीर्त्त्यते ॥ ३ ॥
मायापरः प्रचण्डश्च चपलोऽहङ्कृतेर्वशः ।
आत्मश्लाघापरो दर्पी धीरोद्धत इति स्मृतः ॥ ४ ॥
नृत्यगीतादिनिरतश्चिन्ताहीनो मृदुश्च यः ।
स धीरललितो ज्ञेयः केवलं भोगतत्परः ॥ ५ ॥
सामान्यगुणयोगेन भूयान् सद्वृत्तिशोभितः ।
धीरप्रशान्त इत्येवं नामतः परिकीर्त्त्यते ॥ ६ ॥

मन्त्रिलक्षणम् ।

नीतिविद्यासु निपुणः सत्कुलः प्रियभाषणः ।
सद्वृत्तः सर्व्वधर्म्माणां समद्रष्टा पवित्रधीः ॥ १ ॥
अपक्षपाती निर्दम्भो निरालस्यः प्रतापवान् ।
कामजेषु क्रोधजेषु व्यसनेषु पराङ्मुखः ॥ २ ॥
अलोभी नित्यसन्तृप्तो मन्त्रगोपनतत्परः ।
प्रत्युत्पन्नमतिर्धीर आगन्तुकविलोककः ॥ ३ ॥
इतिहासपुराणादिमर्म्मवेत्ता निरामयः ।
एवं मन्त्री भवेद्राज्ञः शुभसाम्राज्यरक्षणे ॥ ४ ॥

मन्त्रिविभागः ।

स एष मन्त्रेऽधिकृतो मन्त्री नानाविधो मतः ।

बन्धुर्धीरोऽनुरक्तश्च शठो दुष्टश्च पञ्चमः ॥ १ ॥
रहस्यज्ञो लोभहीनः कार्य्याकार्य्यविवेचकः ।
दुःखि दुःखी सुखि प्रीतो नित्यं स्वामिहिते रतः ॥ २ ॥
कुलीनो धार्म्मिको धीरो लोकानामनुरञ्जकः ।
राजाज्ञानेऽपि कर्त्तव्यसाधको बन्धुरुच्यते ॥ ३ ॥
न्यायवान् न्यायतःकारी स्वाधिकाराभिपादकः ।
गम्भीरप्रकृतिर्धीरो धीरैर्धीरो निगद्यते ॥ ४ ॥
यथाज्ञप्तसाधनेषु तत्परो देववत् प्रभुम् ।
द्रष्टा नम्रः शिष्टगुणश्चानुरक्तः प्रकीर्त्त्यते ॥ ५ ॥
कूटन्यायेन कार्य्याणां साधकः स्वार्थतत्परः ।
साहङ्कारो दुराक्रम्यः शठ इत्यभिधीयते ॥ ६ ॥
अनिष्टं सूचयन् भीतिं दर्शयन् स्वार्थसाधनः ।
चतुरोऽन्तश्छिद्रदर्शी निर्भयो दुष्ट ईरितः ॥ ७ ॥
मंत्रिदोषेण नृपतिर्हतराज्यो हतोदयः ।
तद्गुणेन विपन्नोऽपि लभते सम्पदं पुनः ॥ ८ ॥

मन्त्रिविधिः ।

एवं गुणेन सम्पन्नो दुर्लभो विषये रतः ।
हितरतः पुरुषोऽन्वेषणीयः सदा नृपैः ॥ १ ॥
धीरोदात्तभक्तियोगेन विनयेन नराधिपः ।
धीरप्रशान्तं कुर्य्यान्महात्मा भक्तिवन्दनः ॥ २ ॥

लिङ्गमात्रं समालोक्य नोदासीनतया भजेत् ।
प्रायशो जीविकाहेतोर्बहवो लिङ्गधारिणः ॥ ३ ॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ ४ ॥
ये तु सम्प्राप्तविषया भुक्तभोगा निराकुलाः ।
विरक्ता विषये जातास्ते विरक्ता इति स्मृतम् ॥ ५ ॥
गुरुः पुरोहितो वापि यद्येवं गुणवान् भवेत् ।
सोपि मन्त्री भवेदेव यस्मात्तौ सहजौ हितौ ॥ ६ ॥
प्रायशो गृहिणां चेतो धनलुब्धं स्वभावतः ।
तस्माद्धनेन सन्तोष्य गृहिणं मंत्रिणं चरेत् ॥ ७ ॥
अमात्योऽपि मंत्रिरूपस्तस्मादेतान् गुणान् नृपः ।
तत्र पश्यन् पदे तस्मिन् नियुञ्जीत समादरात् ॥ ८ ॥
मातापितृकुलोद्भूतः कुलसम्बन्धिनस्तथा ।
चिरप्रीतिसमायुक्ता अमात्याः स्युर्महीभृताम् ॥ ९ ॥
स्वनाशे यस्य राज्याशा यस्य मित्रस्य वा पुनः ।
तममात्यपदे नैव कदाचिदभियोजयेत् ॥ १० ॥

त्याज्यमंत्रिलक्षणम् ॥

अकुलीनं दुराचारमतिलुब्धं हतत्विषम् ।
धर्म्महीनं शठं क्रूरं विषचित्तं पयोमुखम् ॥ १ ॥
सूचकं स्वार्थनिरतं स्वार्थवञ्चगणान्तथा ।
पक्षपातरतं दुष्टं मन्त्रिणं सर्पवत् त्यजेत् ॥ २ ॥

बलविभागः ।

हयो हस्ती जनः शस्त्रं यानं यन्त्रं महीभृताम् ।
उष्ट्रा गावस्तथा चैवमष्टाङ्गं बलमिष्यते ॥ १ ॥

अश्वादिविभागः ॥

मारवाः पार्व्वता हैमा जलीयाः समदेशजाः ।
अश्वास्तु विविधा ज्ञेया एवं हस्त्यादयो मताः ॥ १ ॥
केचित् सैन्यवहाः केचिदग्निशस्त्रवहास्तथा ।
केचिद्राजवहाः केचिच्छिविकादिवहाः पुनः ॥ २ ॥
एवं हस्त्यादयो ज्ञेया राजकार्य्येषु मानवैः ।
सामर्थ्यमवलोक्यैषां नियुञ्जीत क्रियासु तान् ॥ ३ ॥

जनविभागः ।

सांग्रामिकवैषयिकभेदेन द्विविधा जनाः ।
आद्या रणसहायाः स्युर्विषयेषु परे मताः ॥ १ ॥

सांग्रामिकविभागः ।

पदातयो हयारोहा यानरोहाः करिव्रजाः ।
शतघ्नीचालका भूमिखनकाः पदमार्ज्जकाः ॥ १ ॥
रणवाद्यकराः केचित् केचिन्नष्टचिकित्सकाः ।
केचिन्नष्टादिसम्वाहाः केचिद् भक्ष्यादिसाधकाः ॥ २ ॥
शिविकादिवहाः केचित् स्थानसम्मार्ज्जकाः परे ।
एवं कार्य्यविभागेषु विविधास्ते समीरिताः ॥ ३ ॥

दृशस्त्वेको भवेद् द्रष्टा तेषु द्रष्टृषु चापरः ।
अपरेषु तथैवैकः क्रमादेवं परः परः ॥ ४ ॥
निरालस्यो मदोन्मत्तः क्रूरः क्लेशसही युवा ।
तृणवज्जीवनालोकी नियोज्यः पुरुषो रणे ॥ ५ ॥
मारवाडिजनाः स्थाप्या मर्व्वादिषु यथानयम् ।
तत्तद्देशेषु संग्रामे प्रेषणीयाश्च ते नृपैः ॥ ६ ॥
एवमश्वादयो ये ये यद्यद्देशसमुद्भवाः ।
तत्तद्देशे कार्य्यपाते ते प्रेष्याः शुभमिच्छता ॥ ७ ।
जीवन्ति मनुजा भूमौ मीना नश्यन्ति भूमिषु ।
स्वभाव एव जन्तूनां प्राणरक्षाकरः सदा ॥ ८ ॥
यदि कार्य्यातिपातःस्यादाक्रमे दारुणे रिपोः ।
तदैष नियमस्त्याज्यो नियमः सम्भवे स्थिरः ॥ ९ ॥

वैषयिकविभागः ।

राजस्वग्राहिणः केचित् केचित्तद्रक्षकाः स्मृताः ।
भोग्यसन्दर्शकाः केचित् केचिद्देयप्रदर्शकाः ॥ १ ॥
व्यवहारेक्षिणः केचित् केचिन्नष्टेष्टदर्शकाः ।
केचिन्न्यायविलोकाः स्युः केचिन्नृपतिरक्षकाः ॥ २ ॥
केचिद्विचारेऽधिकृताः केचिद्धर्म्मनियोजिताः ।
केचिद्विद्याविभागस्थाश्चिकित्सावेदिनः परे ॥ ३ ॥
केचिद्भूमिविलोकाः स्युः केचिदाकरलोककाः ।
एवं कार्य्यविभागेषु पृथग् वैषयिकाः स्मृताः ॥ ४ ॥

वृत्तयो बहवो लोके कार्य्यं तदनुसारतः ।
अनुक्ता अपि संग्राह्याः कार्य्यं दृष्ट्वा महीभृताम् ॥५॥

राजस्वग्राहिविभागः ।

ग्रामे च मण्डले चैव देशे प्राधान्यतः क्रमात् ।
राजस्वग्राहिणो राज्ये राज्ञां बहुविधाः स्मृताः ॥ १ ॥
एवं जले च पुलिने पर्व्वतादौ पृथक् पृथक् ।
राजस्वग्राहिणो राज्ञां विश्वस्तानीतितत्पराः ॥ २ ॥

राजस्वरक्षकलक्षणम् ।

आनीय राजभोग्यस्य यदाधीन्ये नियोजनम् ।
तस्य संरक्षका ये स्युस्ते तद्रक्षितया मताः ॥ १ ॥

भोग्यदर्शकलक्षणम् ।

भोग्यमन्नं पशुर्यानं पृथ्वीजलनभस्थलम् ।
वस्त्रं रत्नं गृहारामौ वापिका शयनादिकम् ॥ १ ॥
एवं बहुविधं ज्ञेयं यद्राज्ञा परिभुज्यते ।
नियुक्तास्तेषु ये दासा भोग्यसन्दर्शकास्तु ते ॥ २ ॥

देयप्रदर्शकलक्षणम् ।

क्रये धर्म्मे वेतने वा वृद्ध्यादौ यत् प्रदीयते ।
नियुक्तास्तत्र भूपेन ज्ञेया देयप्रदर्शकाः ॥ १ ॥

व्यवहारदर्शिलक्षणम् ।

आदानं प्रतिदानञ्चा राजभिर्बन्धुभिश्च यत् ।
अन्यैर्वा तत्र संयुक्ता व्यवहारेक्षिणो मताः ॥ १ ॥

नष्टेष्टदर्शकलक्षणम् ।

प्रदानादानकार्य्यादौ किं नष्टं वर्द्धते च किम् ।
तद्दर्शननियुक्तास्तु ज्ञेया नष्टेष्टदर्शकाः ॥ १ ॥

न्यायदर्शिलक्षणम् ।

परिवर्त्ते विधाने वा रक्षणे न्यायवर्त्मनाम् ।
नियुक्ता ये नृपैस्तेतु ज्ञेया न्यायविलोककाः ॥ १ ॥

राजरक्षकलक्षणम् ।

भूपते रक्षणे ये सुगमने शयने स्थितौ ।
नियुक्ताः शस्त्रसम्वाहा विश्वस्ता भूपरक्षकाः ॥ १ ॥

विचाराधिकारिलक्षणम् ।

दण्डदायप्रभेदेन विचारो द्विविधो मतः ।
विचारेऽधिकृता ज्ञेया नियुक्तास्तत्र भूभृता ॥ १ ॥
एतेऽपि प्रथमा मध्या अधमाः परिकीर्त्तिताः ।
अधमादिक्रमात् ते सुद्रष्टारो नीतितत्पराः ॥ २ ॥
एवं कार्य्यविभागेषु प्राधान्याद्यैर्नियोजनम् ।
विना प्रभुं न कार्य्याणि सिध्यन्ति नियमात् क्वचित् ॥ ३ ॥

धर्म्माधिकारिलक्षणम् ।

येषां यथा यथा धर्म्मो वर्त्तते कुलदेशतः ।
यदा यदा च कर्त्तव्यः स्वेन वा शुभमिच्छता ॥ १ ॥
तद्दर्शननियुक्ता ये ते सुधर्म्मविलोककाः ।
एते भवन्ति नृपतेः पुरोधः पण्डितादयः ॥ २ ॥

विद्याविभागस्थलक्षणम् ।

अध्यात्मकृषिवाणिज्यज्योतिःशिल्पकलादिषु ।
ज्ञेया विद्याविभागस्था नियुक्ताः परिलोकने ॥ १ ॥

अध्यात्मविद्यालक्षणम् ।

यां यां वृत्तिमुपादाय मनो युङ्क्ते विवक्षया ।
जीवः स्वमिष्टमाधातुमनिष्टम्वा व्यपोहितुम् ॥ १ ॥
सा वृत्तिः कथमुत्पन्ना किम्वा कार्य्यं करिष्यति ।
किं करोति किमात्मा वा किम्फला वा भवेन्नृणाम् ॥ २ ॥
एवं यद् विदया वेद्यं तदध्यात्ममुदीर्य्यते ।
विद्यैषाखिलविद्यानां कल्याणी जननी परा ॥ ३ ॥
अभ्यासात् सर्व्वशास्त्राणां सङ्गाद्यापि महात्मनाम् ।
दर्शनात् प्राणिवृत्तीनां भोगजातस्य भोजनात् ॥ ४ ॥
प्रणिधानेक्षणादेषां कृपातो वा जगद्विभोः ।
कोटिष्वेकस्य कालेन विद्यैषा सम्प्रसीदति ॥ ५ ॥
यस्याः प्रसादात् सर्व्वञ्च भोगमोक्षौ करस्थितौ ।
कृतकृत्यो नरो भूत्वा नटवच्चरति क्षितौ ॥ ६ ॥

कृषिविद्यालक्षणम् ।

उत्पादनं मेलनं च व्याधिं शान्तिं नियोजनम् ।
शस्यगुल्मलतावृक्षप्रभृतीनां यथायथम् ॥ १ ॥
पर्व्वते सलिले भूमौ तथा भूमिरुहादिषु ।
अन्वया जनो विद्यात् कृषिविद्येयमुच्यते ॥ २ ॥

वाणिज्यविद्यालक्षणम् ।

यद् यद् देशेषु यद् द्रव्यं यदा स्यात् सुलभं क्रये ।
विक्रये दुर्लभं चैवं रक्षणं चालनादिकम् ॥ १ ॥
इत्यादिका क्रिया सर्व्वा यया विज्ञायते नृभिः
वाणिज्यविद्या सा ज्ञेया सर्व्वसम्पद्विधायिनी ॥ २ ॥

ज्योतिर्विद्यालक्षणम् ।

ग्रहतारादिसञ्चारसलिलादेर्गमागमौ ।
विज्ञायेते यया साक्षाज्ज्योतिर्विद्या महाफला ॥१॥

शिल्पविद्यालक्षणम् ।

वयनं वसनादीनां शालभञ्जादिकल्पनम् ।
वाष्पादिवेगविज्ञानं चक्रादिपरियोजनम् ॥ १ ॥
आकाशे सलिले भूमौ कौशलाद्वस्तुचालनम् ।
यया सम्वेद्यते साक्षाच्छिल्पविद्या धनप्रदा ॥ २ ॥

कलाविद्यालक्षणम् ।

नृत्यसंगीततालादेरिङ्गितादेश्च बोधनम् ।
यया सञ्ज्ञायते सा स्यात् कलाविद्या सुखप्रदा ॥ १ ॥

विद्यासामान्यलक्षणम् ।

आङ्गिना प्राणिभूतत्त्वपुरानागरसादयः ।
यया यथाधिवेत्तव्याः सा सा विद्या प्रकीर्त्तिता ॥१॥

चिकित्सकलक्षणम् ।

धातूद्भिज्जविषादीनां योगेनौषधकल्पने ।
वायुपित्तकफादीनां तथैव च परीक्षणे ॥ १ ॥

कालस्वाल्पपरिज्ञाने देहचक्रविलोकने ।
छेदे भेदे समर्था ये चिकित्साविदिनो हि ते ॥ २ ॥

भूदर्शिलक्षणम् ।

इदमत्र प्रजायेत नेदमत्र प्रजायते ।
इदमुद्वर्ततेऽनेन नश्यतीदमनेन च ॥ १ ॥
समयेस्मिन्निदं ग्राह्यमस्मिन्नेतन्न गृह्यते ।
इदं ये तत्त्वतो विदुस्तेस्युर्भूमिविलोककाः ॥ २ ॥

आकरविलक्षणम् ।

उद्भित्प्राणिधातुरत्नमाराङ्गारादिभेदतः ।
आकरा वहवस्तज्ज्ञा मता आकरलोककाः ॥ १ ॥

अस्त्रभेदः ।

दहनास्त्रं विषास्त्रं च खड्गवाणासिपट्टिशाः ।
कुन्तकोदण्डादिभेदादस्त्रं वहुविधं स्मृतम् ॥ १ ॥

यानभेदः ।

पृथ्वीजलाकाशचराद् यानन्तु त्रिविधम्मतम् ।
लोकाश्वगजवाष्पाद्यैर्भूयानंवाहितम्भवेत् ॥ १ ॥
वाष्पैर्वा मानवैर्वातैर्जलयानं प्रवाह्यते ।
वाष्पेण वायुना वापि व्योमयानं प्रधावति ॥ २ ॥
अन्यद्वार्त्तावहं यानं ताड़ितक्रियया भवेत् ।
क्षणेन सर्व्वजगतां कार्य्याणां परिसाधकम् ॥ ३ ॥

यन्त्रलक्षणम् ।

सिध्यत्यल्पप्रयासेन कार्य्यजातं यदाश्रयात् ।
जन्तुवायुजलाग्न्यादेर्बलात् तद्यन्त्रमुच्यते ॥ १ ॥

उष्ट्रादिभेदः ।

उष्ट्रा गावो वहुविधा नानादेशप्रभेदतः ।
रासभाजादिकं ग्राह्यं पर्वताद्यधिरोहणे ॥ १ ॥

दुर्गलक्षणतद्भेदौ ।

यद्दुर्गममरीणां स्यादन्नपानादिरञ्जितम् ।
पूरितं सर्वभोग्येन तद्दुर्गमभिधीयते ॥ १ ॥
पार्वतं सारितं वन्यं मारवं वैणवन्तथा ।
सैकतं कृत्रिमं मिश्रं कार्द्दमं नवधा च तत् ॥ २ ॥
चतुःपार्श्वेषु यस्यास्ते गिरिरुच्चतरोऽगमः ।
वासयोग्यं भवेन्मध्यं तत्पार्वतमुदीरितम् ॥ ३ ॥
अथवोच्चगिरेः शृङ्गे वासयोग्ये सुदुर्गमे ।
यद्दुर्गं क्रियते राज्ञा तत्पार्वतमुदीर्य्यते ॥ ४ ॥
सरिद्भिर्वेष्टितं यत् स्यात् पदं पार्श्वेषु सर्वतः ।
सारितं कीर्त्तितं लोकैर्महाक्षेत्रसमन्वितम् ॥ ५ ॥
एवं वनेन दुर्गेण हिंस्रपूर्णेन वेष्टितम् ।
वनदुर्गं विजानीयात् सर्वभोग्यसमन्वितम् ॥ ६ ॥
जलच्छायान्नहीनेन मरुणावेष्टितं पदम् ।
मध्येजलं महाक्षेत्रं मारवं परिकीर्त्तितम् ॥ ७ ॥

एवं गाढ़ावृतिर्वेणुर्यस्य पार्श्वेषु शोभते ।
वायोरपि दुराक्रम्यं तद्वैणवमुदीर्य्यते ॥ ८ ॥
सिकतापर्व्वताकाराजलच्छायादिविच्युता ।
पार्श्वे राजगृहं तत्र सैकतं दुर्गमुच्यते ॥ ९ ॥
दुर्गमं कर्द्दमैर्घोरैरन्तर्वाहिजलाशयैः ।
स्थितिमद्भिश्चिरं पार्श्वे यस्य तत् कार्द्दमं स्मृतम्॥१०॥
मिश्रमन्यतमैः कीर्णं पार्श्वेष्वन्यतमेषु च ।
स्वाभाविकं कृत्रिमं च द्विरूपं तत् त्रिधा स्मृतम्॥११॥
एकैकवेष्टितं दुर्गं दुर्गमं स्यात् स्वभावतः ।
द्वित्र्यादियोगे शत्रूणां नास्ति चेतःपथागमः ॥ १२ ॥
चक्रकूर्म्मधनुःशंखाद्याकारं विविधं हि तत् ।
यथालभ्यपदं कुर्य्यात् सर्व्वमेव दुराक्रमम् ॥ १३ ॥
देशान्तरे रणार्थे रक्षणाय प्रकल्पयेत् ।
गजाश्वमानवाद्यैस्तु दुर्गं तात्कालिकं बहु ॥ १४ ॥

दुर्गविधिनियमः ।

कोष्ठं तत्र विधातव्यमन्ततस्त्रितयाधिकम् ।
प्रतिकोष्ठं महाद्वारं दुर्भेद्यं रक्षकैर्युतम् ॥ १ ॥
दुर्गभित्तौ चतुर्द्दिक्षु वह्न्यस्त्राणि योजयेत् ।
तत्रालकगृहं गूढं दुर्भेद्यं शत्रुभिस्ततः ॥ २ ॥
महाद्वारस्य पार्श्वे द्वे रक्षणीये प्रयत्नतः ।
अग्न्यस्त्रादिसुनिपुणैर्विश्वस्तैः साहसाश्रितैः ॥ ३ ॥

स्तम्भानस्य चतुःपार्श्वे तथा कुर्य्यान्नराधिपः ।
यत्र स्वल्पा अपि स्थित्वा ताड़येयूरिपोर्गणान् ॥ ४ ॥
तथाग्निमयशस्त्रादि तत्र स्थाप्यं प्रयत्नतः ।
यतः सञ्चालने सर्व्वं पार्श्वमाच्छादितम्भवेत् ॥ ५ ॥
एवं पार्श्वेषु यन्त्राणि विधातव्यानि यत्नतः ।
बले हीनबले येषां क्रियातो दुर्गमम्भवेत् ॥ ६ ॥
जलयन्त्रं गुहायन्त्रं यन्त्रमग्न्यादिसाधनम् ।
तद् भवेद् विविधाकारं गूढ़रूपं दुरासदम् ॥ ७ ॥
अन्ततो वर्षभोग्येन द्रव्येन परिपूरितम् ।
कुर्य्याद् दुर्गं नरेशानः स्वराज्यस्थितिलिप्सया ॥ ८ ॥
द्वारं प्रास्थानिकं कुर्य्याद् दुर्बोधमपरैः सदा ।
आक्रमेऽपि रिपोर्येन नाक्रम्यः स्यान्महीपतिः ॥ ९ ॥
शस्त्रागारं पश्वगारं सैन्यागारं तथाचरेत् ।
येन कार्य्यप्रपातेषु क्लेशलभ्यं भवेन्न तत् ॥ १० ॥
येन वा वहिरासीनैर्नोच्छिद्यन्ते परैः कदा ।
शस्त्रादीनि तथा तत्र स्थापनीयानि यत्नतः ॥ ११ ॥
हययानादिकं तत्र तथास्थाने निवेशयेत् ।
सर्व्वस्मिन् विफले यत्ने येन प्रस्थातुमीश्वरः ॥ १२ ॥
आलयारामकूपादि यथास्थाने पृथक् पृथक् ।
दासानां महतां स्त्रीणां येन कार्य्यं प्रभेदतः ॥ १३ ॥

अन्ननिरूपणम्।

उद्भित्प्राणिप्रभेदेन तदन्नं द्विविधं स्मृतम्।
धान्यद्विदलगोधूमयवाम्बाद्युद्भिदुच्यते ॥ १ ॥
अजपक्षिमृगाद्यानां भेदादन्यद् बहूच्यते।
तैलदुग्धसर्पिरादि यद् भवं तत्तदुच्यते ॥ २ ॥

कोषनिरूपणम्।

संस्थाप्यते धनं यत्र स कोषः परिकीर्त्त्यते।
स्पष्टगुप्तप्रभेदेन कोषस्तु द्विविधो मतः ॥ १ ॥
वेतनादिप्रदानार्थं ऋणादानादिकारणात्।
धर्म्माद्यर्पणतस्तादृक् स्वेच्छादेयविधानतः ॥ २ ॥
एवं बहुविधो ज्ञेयः स्पष्टकोषो महीभृताम्।
गुप्तः स यत्र रक्ष्यन्ते धनानि व्ययवर्ज्जनात् ॥ ३ ॥
कश्चिद्विपत्तौ संग्राह्यः कश्चिन्निधिरिव स्थिरः।
अयं गोप्यः प्रयत्नेन राज्ञा कल्याणमिच्छता ॥ ४ ॥

चरनिरूपणम्।

लोकानां तत्त्वमन्वेष्टुं यश्चरेच्चर एव सः।
गुप्तप्रकाशभेदेन स चरो द्विविधो मतः ॥ १ ॥
राजभक्तः समालोकी लोभमोहविवर्ज्जितः।
नानारूपधरो वाग्मी साहसी लोकरञ्जकः ॥ २ ॥
यो गोपनात् परोद्देशं तत्त्वाद्विज्ञाय भूपतिम्।
विज्ञापयेत् स लोकेषु गुप्तचारः प्रकीर्त्त्यते ॥ ३ ॥

यावत् कार्य्यविभागोऽस्ति भूपतेरनुजीविनाम् ।
शत्रूणां सुहृदां चात्र गुप्तचारः पृथक् पृथक् ॥ ४ ॥
नैपुण्यं यस्य यत्कार्य्ये तं परीक्ष्य महीपतिः ।
धनवस्त्रादिनातोष्य साधयेत्तेन तत्क्रियाम् ॥ ५ ॥
दस्युकार्य्यविलोकार्थं दस्युमेव नियोजयेत् ।
तथाधिकारिणां कार्य्ये तत्कार्य्यनिपुणं स्मरेत् ॥६॥
प्रायशो जीवलोकेषु प्रियवाचो मनोमलाः ।
तेषां दोषविघाताय गुप्तचारो महाशनिः ॥ ७ ॥
स्पष्टचौराः सुकार्य्याः स्युर्गुप्तचौरा भयङ्कराः ।
रहः स्वल्पहराः स्पष्टा गुप्ता राज्यहराः स्मृताः ॥८॥
सामदानादिसंसिध्यै प्रेष्यते यो महीभृता ।
स प्रकाशचरो ज्ञेयः साहसी वाचितत्परः ॥ ९ ॥
निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
एषां भेदेन लोकेषु स्पष्टचारस्त्रिधा मतः ॥ १० ॥
उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थः प्रकीर्त्त्यते ॥ ११ ॥
मितार्थभाषी कार्य्यस्य सिद्धकारी मितार्थकः ।
यावद्भाषितसन्देश-हारी सन्देशहारकः ॥ १२ ॥

प्रजानिरूपणम् ।

स्थिरागन्तुकभेदेन प्रजा तु द्विविधा मता ।
या वसन्ति स्वसाम्राज्ये ताः स्थिराः परिकीर्त्तिताः ॥१॥

वाणिज्यार्थं विलोकार्थं तीर्थार्थं दास्यतोऽपि वा ।
आयाता अन्यतो देशादस्थिराः परिकीर्त्तिताः ॥२॥

नीतिलक्षणम् संक्षेपतः कर्त्तव्यनिरूपणञ्च ।

नयेन चालयन्नेतान्यङ्गानि पृथिवीपतिः ।
भुक्त्वेह सकलान् भोगान् परत्र लभते सुखम् ॥ १ ॥
येन तिष्ठेद्वशे लोको येन स्यादात्मनो हितम् ।
येनाभ्युदयिनः सर्व्वे स उपायो नयो मतः ॥ २ ॥
चतुष्पदा नीतिरेषा सदसज्ज्ञानमादिमम् ।
अन्यत् साधनसम्प्रत्तिस्तृतीयं विघ्नचिन्तनम् ॥ ३ ॥
परिणामेक्षणं तूर्य्यं पदमेतच्चतुष्टयम् ।
एषा सर्व्वस्य लोकस्य ज्ञेया कल्याणदायिनी ॥ ४ ॥
द्वे धर्म्मसहचारिण्यौ श्रद्धा नीतिश्च शाश्वती ।
पूर्व्वयोर्दैत्ययं धर्म्मोऽपरया चैव सिध्यति ॥ ५ ॥
राजनीतिर्महालक्ष्मी राजा नारायणः स्वयम् ।
उभाभ्यां स्थाप्यते धर्म्मो विश्वस्याभ्युदयो यतः ॥ ६ ॥
देहस्य भूषणं शास्त्रं क्षमा शास्त्रस्य भूषणम् ।
क्षमाया भूषणं शक्तिर्नीतिः शक्तेश्च भूषणम् ॥ ७ ॥
उपाया विविधा लोके चित्तवृत्त्यनुसारतः ।
वृत्तयो बहुधा ज्ञेयाः प्रकृतेर्भोगयोगतः ॥ ८ ॥
अस्माकमिष्टमन्येषां द्विष्टमेवं परस्परम् ।
वैपरीत्येन गृह्णाति वृत्तिरेषां हि दुर्व्वशा ॥ ९ ॥

एकानुकरणोऽप्यन्यो विद्वेषं लभते चणात् ।
सर्व्वेषां रञ्जनं लोके दुष्करं भिन्नचेतसाम् ॥ १० ॥
अध्यात्मबोधयोगेन तस्माद्दीच्छितवृत्तिकः ।
कारणं कार्य्यमालोच्य चालयेल्लोकसञ्चयम् ॥ ११ ॥
बहुक्लेशकरी येषां वृत्तिरापाततः सुखा ।
दण्डाद्दानान्मैत्रतो वा तेषां शोध्या शनैः शनैः ॥१२॥
चेत्रभेदेन या वृत्तिर्विरुद्धा त्यक्तुमचमा ।
सा चेत्रिणां पृथक् कृत्वा पालनीयाऽविरोधतः॥१३॥
उदासीनः स्वयं भूत्वा सर्व्वदृक् सर्व्वरञ्जनः ।
प्रीतियोगेन सर्व्वेषां स्थितिं रचेन्नराधिपः ॥ १४ ॥

सद्गुणनिरूपणम् ।

औदार्य्यं लोकमार्गेण पालनं समदर्शनम् ।
उत्साहदानं कार्य्याणां साधनाद्दुष्टताड़नम् ॥ १ ॥
अस्वार्थपरता नित्यं गुणानां परिरचणम् ।
एत एव महोपाया राज्ञामभ्युदये मताः ॥ २ ॥

दुर्गुणनिरूपणम् ।

हृदये दोषगरलं मुखे माधुर्य्यमुज्ज्वलम् ।
अन्तः स्वच्छन्दचारित्वं वहिर्धर्म्मानुरागिता ॥ १ ॥
गुणानामनभिध्यानं व्यसनेष्वनुरागिता ।
सत्सु शाठ्यं शठे मैत्रं स्वार्थसन्धाननैपुणम् ॥ २ ॥

आग्रहः स्वोत्तरत्वायां हितवाक्येष्वनाग्रहः ।
अहमेवेति विज्ञानं घृणा दासादिकेषु च ॥ ३ ॥
उत्साहदानं कार्य्यात् प्राक् सिद्धे कार्य्ये तिरस्क्रिया ।
सर्व्वकार्य्येष्वविश्वासः कार्य्याणामपुरस्क्रिया ॥ ४ ॥
सम्मुखे सादरालापः पश्चाद् विद्वेषणं छलात् ।
वाचालतातिमात्रं च वृथा संतापनं मुहुः ॥ ५ ॥
समये वेतनादानं कार्य्याणामपरीक्षणम् ।
नीचस्योन्नतिसन्दानं महतामनुपातनम् ॥ ६ ॥
हठेन ग्रहणं भृत्या-मात्यादिस्त्रीनिषेवणम् ।
धर्म्मस्योच्चाटनं तादृक् समयानां विरोधनम् ॥ ७ ॥
करेणोत्पीड़नं नित्यं स्वेच्छातस्वरणं तथा ।
सुरानार्य्यादिसंरक्षिहितानामपरिग्रहः ॥ ८ ॥
एत एव महादोषाः समयं प्राप्य भूभृताम् ।
राज्यं धनं कुलं प्राणान् नाशयन्त्यचिराद् ध्रुवम् ॥९॥

लोकसंग्रहः ।

स्वराज्ये परराज्ये वा ये केचिदिह मानवाः ।
लिङ्गिनश्छद्मनाजीवाः शठाश्चौराश्च दस्यवः ॥ १ ॥
विद्वांसो वणिजो वन्याः शिल्पिनः पार्वतादयः ।
एतान् सर्व्वान् वशीकुर्य्यान्नृपतिः शुभकाम्यया ॥ २ ॥
प्रत्येकं जनसंघानां रञ्जनं लोकदुर्लभम् ।
बहवो बहुदेशस्था बहुकर्म्मकरा हि ते ॥ ३ ॥

तत् तेषां महतां वंशे विख्यातो बहुमण्डलः ।
यो भवेत्तमुपादाय पालयेत् पृथिवीपतिः ॥ ४ ॥
पूजनाद् भजनात् सौख्यान्मासवर्षादिदापनात् ।
भूशस्यपशुरत्नादिदानात् परिणयादिना ॥ ५ ॥
समाजेषु महावंश्यानेवं सम्पोषयेन्नृपः ।
कार्य्यकाले त एवैते निन्युः सर्व्वान् वशं जनान् ॥६॥

केवलतैक्ष्ण्यदोषः ।

केवलं तीक्ष्णभावेन यो लोकानां वशीकृतौ ।
यततेऽसौ दुष्टचेता नाचिरं लभते सुखम् ॥ १ ॥
तीक्ष्णता दुष्टदमने न सतामनुरञ्जने ।
तीक्ष्णस्य सर्व्वदा गैत्यं चित्तस्थैर्य्यविमर्द्दकम् ॥ २ ॥
अस्थिरे मानसे नित्यं क्रोधवह्निविदाहिते ।
राज्यैर्वा विभवैर्वापि विक्रमैर्वा भवेत् किमु ॥ ३ ॥
तीक्ष्णस्य सर्व्वदा भीतिर्लोकाच्छिद्रानुधाविनः ।
विपत्तौ दुर्लभं मित्रं तैक्ष्ण्यवह्निप्रपीड़ितम् ॥ ४ ॥
शिष्टानां पालनैस्तस्माद् दुष्टानां परिपीड़नैः ।
यो वर्त्तते नरेशानः स चिरं लभते सुखम् ॥ ५ ॥

कामजव्यसनानि ।

मृगयाऽक्षो दिवास्वप्नः परीवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ १ ॥

तत्र प्रसक्तो नृपतिर्धर्म्मार्थाभ्यां वियुज्यते ।
तयोर्नाशे जीवलोके जीवनं विफलं भवेत् ॥ २ ॥

मृगयादोषः ।

मृगयायां समासक्तो नृपतिर्वन्यबान्धवः ।
हीनबुद्धिर्वने नित्यं भ्रमति भ्रान्तचेतनः ॥ १ ॥
लक्ष्यवेधेन या प्रीतिस्तन्मात्रमनुपश्यताम् ।
लतामध्ये गुहामध्ये सरित्तीरे तरोस्तले ॥ २ ॥
अयमायाति लक्ष्यो मे चायं निर्याति वेगतः ।
भीत्याऽयं स्थगितो भ्रान्तो नायं निर्य्यातुमीश्वरः ॥३॥
एवमौत्सुक्यमालोक्य तिष्ठतां भ्रान्तचेतसाम् ।
दिवारात्रं विनिर्याति वने वन्यैर्महीभृताम् ॥ ४ ॥
धनलुब्धा जनाः सर्वे तदुत्साहप्रयोजकाः ।
तत्र निक्षिप्य नृपतीन् हरन्ति धनसञ्चयम् ॥ ५ ॥
स्वभावतो वनं रम्यं शरीरस्वास्थ्यकारकम् ।
दरिद्राणामपि प्रेयः किमु निश्चिन्तचेतसाम् ॥ ६ ॥
सर्वदा तन्निविष्टानां हीनैः सह समागमात् ।
पुष्टात्मनां मांसभोगात् कामवृत्तिः प्रजायते ॥ ७ ॥
कामात् सञ्जायते क्रोधः क्रोधात् पापं विवर्द्धते ।
पापाल्लोकस्य विद्वेषो विद्वेषान्नाशमाप्नुयात् ॥ ८ ॥

अक्षदोषः ।

अक्षोऽभिसारिका ह्येषा वन्द्या नाश्या सुदुर्लभा ।
स्वजयेऽन्यपराभूतिः पुनर्विजयवासना ॥ १ ॥

स्वाजये विजिगीषा च वृत्तिरेवं क्रमागता ।
वृथा हरति कालं हि हीनैस्तद्वृत्तिशालिभिः ॥ २ ॥
हीनसङ्गे वुद्धिलोपो वुद्धिलोपे शठाक्रमः ।
शठाक्रमे न्यायहानिर्न्यायहानौ विनश्यति ॥ ३ ॥
चेदेष पणयोगेन साध्यते धनशालिना ।
तदा च्षणेन राज्यानां धनानामपि संच्चयः ॥ ४ ॥
अस्योदरस्य सम्पूर्त्तिः सम्राजाऽपि सुदुष्करा ।
अस्योदरे पुरा लीना वहवो वसुधाभृतः ॥ ५ ॥

दिवास्वप्नदोषः ।

दिवा विषयदृष्ट्यर्थं रात्रिर्भोगप्रसाधिका ।
दिवास्वप्ना महीशाना विषयान् नेक्षितुं च्षमाः ॥१॥
रात्रौ निद्रां परित्यज्य दुष्टैर्भोगप्रसाधकैः ।
जातालस्या निरुत्साहा हरन्ति समयं नृपाः ॥ २ ॥

परीवाददोषः ।

परीवादे नरेन्द्राणामश्रद्धावान् जनो भवेत् ।
नानुरक्तिं समागच्छेद् विद्वेषं लभते हृदा ॥ १ ॥
जनद्वेषे नृपो द्वेषी जने रक्ते नृपो रतः ।
परस्परकृते द्वेषे क्व शुभं स्यान्महीभृताम् ॥ २ ॥

स्त्रीदोषः ।

स्त्रीरूपा राच्षसी ह्येषा विषमध्या पयोमुखा ।
सर्वदोषस्य जननी सर्वकल्याणनाशिनी ॥ १ ॥

दर्शनात् स्पर्शनात् स्मृत्या क्षणाच्चित्तप्रमादिनी ।
सर्व्वाधिकसुखाभासदर्शिनी कामरूपिणी ॥ २ ॥
गन्धरूपरसस्पर्शशब्दाख्या विषयाश्च ये ।
ते सर्वे कामरूपासु कामिनीषु प्रतिष्ठिताः ॥ ३ ॥
रूपं कामयते नेत्रं गन्धं नासाऽभिरोचते ।
रसे रसज्ञा रसना स्पर्शस्तस्याः सुधाम्बुधिः ॥ ४ ॥
शब्दो दास्यकरो नार्य्याः कटुर्वा मधुरोऽपि वा ।
तस्मात् सर्वस्वरूपेण नारीरूपं भयङ्करम् ॥ ५ ॥
तस्यां प्रसक्तो नृपतिर्हतज्ञानो हतोद्यमः ।
अलसो रुग्नदेहश्च सर्व्वव्यसनतत्परः ॥ ६ ॥
अश्रद्धेयो नृभिर्नित्यं हीनबुद्धिर्हतप्रभः ।
स्त्रीदेवो दासतामेति यथा सा सम्प्रसीदति ॥ ७ ॥
सक्तस्य चेतसो नारी न निर्याति कथञ्चन ।
सर्व्वान् निक्षिप्य वेगेन स्वं रूपं दर्शयेत् सदा ॥ ८ ॥
अस्मिन्नेव महापङ्के निमज्जयितुमुद्यताः ।
यतन्ते मानवा नित्यं ये दुष्टा धनहारिणः ॥ ९ ॥
एतदेव प्रियं नित्यं विषयासक्तचेतसाम् ।
आकर्षति बलाच्चित्तमेतदेव महीभृताम् ॥ १० ॥
एतत्संसाधका ये स्युस्ते स्युरापाततः प्रियाः ।
सर्व्वं हरन्ति कालेन दुर्व्वार्य्याः सर्व्वघातिनः ॥ ११ ॥

यौवनारूढ़वयसामस्माद्रचा सुदुर्लभा ।
तस्मात्तैः परिषिवेरन् येऽस्मात्सन्तारणे चमाः ॥ १२ ॥
वृद्धा अपि न विश्वास्या धनलोभापराङ्मुखाः ।
न केचिदिह संसारे तस्मात् सर्व्वान् परीचयेत् ॥ १५ ॥
यदि कश्चिन्महाचेता विरक्तो लोभवर्ज्जितः ।
दयां कृत्वा नृपं शास्यात् तदा जीवेन्महीपतिः ॥ १४ ॥

मदः ।

मदोऽपि दुस्तरो व्याधिर्मद्यादेरुपजायते ।
तत्सेविनां तदा तत्र वासना दुरतिक्रमा ॥ १ ॥
तद्वासनस्तदासेवी तेनोपहतचेतनः ।
रुग्नः सदा कामयते मदरूपं महाविषम् ॥ २ ॥
प्राणनाशेऽपि नादेयं मद्यं मोहकरं नृणां ।
सकृत् स्वादेऽपि दुस्त्याज्यं सर्व्वनाशकरं विषम् ॥३॥

तौर्य्यत्रिकम् ।

नृत्यं गीतं तथा वाद्यं यत् तौर्य्यत्रिकमीर्य्यते ।
तत्सर्व्वं स्त्रीमदादीनां सहायं कालहारकम् ॥ १ ॥
सर्व्वस्याचित्तमाकृष्य महाप्रीतिं प्रदर्शयेत् ।
दिवारात्रं स्वदासत्वे नियुङ्क्ते पृथिवीपतिम् ॥ २ ॥

वृथाट्या ।

सुखमात्राभिलोभेन देशदर्शनरागिणाम् ।
चेतो हरति भूपानां पदं नित्यं नवं नवम् ॥ १ ॥

देशा अनन्ता वर्त्तन्ते नानाभोग्यसमाकुला: ।
यावज्जीवं चरन् वापि को दृष्ट्वा परिशेषयेत् ॥ २ ॥

सर्व्वेषां सामान्यतो दोषः ।

सर्व्वमेतन्नरेन्द्राणां विषयानीक्षितैः पदम् ।
तस्मादेतानि यत्नेन वर्ज्जयेत् पृथिवीपतिः ॥ १ ॥
ये केचिद्राजसम्बद्धाः सर्व्वेषां प्रायशो मतिः ।
राजानो नाभिपश्यन्तु तिष्ठन्तु व्यसने सदा ॥ २ ॥
एभिर्दोषैर्महीशाना बहवो हतचेतनाः ।
बभूवुर्वञ्चिताः पूर्व्वं भृत्यामात्यैर्दुरात्मभिः ॥ ३ ॥
मदोऽक्षः स्त्री महादोषा एतेषु परिकीर्त्तिताः ।
तस्मादेतान् प्रयत्नेन वर्ज्जयेत् पृथिवीपतिः ॥ ४ ॥

व्यसनविधिः ।

लुप्ते युद्धे हतोत्साहे सैनिके मृगया शुभा ।
रहस्ये प्रिययासङ्गे सेव्योऽक्षः कौतुकावहः ॥ १ ॥
वैधे निशाजागरणे दिवास्वप्नः प्रशस्यते ।
परीवादः प्रशस्तः स्यान्निर्वेदे मुक्तिमिच्छताम् ॥ २ ॥
भार्य्यायामृतुकाले च सक्तिर्नार्य्यां शुभावहा ।
पीड़ायां समरोत्साहे यज्ञे हितकरो मदः ॥ ३ ॥
दैवोत्सवे गृहोत्साहे तौर्य्यत्रिकमनिन्दितम् ।
अटनं स्वास्थ्यरक्षायामामंत्रे वारिविद्रवे ॥ ४ ॥

एवं यत्र यत्र चैषां न दोषः परिलोक्यते ।
गुणश्च लभ्यते तत्र व्यसनी स्यान्नचान्यथा ॥ ५ ॥
तत्रापि तैर्महासत्त्वैः सेवनीयो न च स्वयम् ।
ये निवर्त्तयितुं शक्ता वीर्य्यमेषां दुराक्रमम् ।

क्रोधजव्यसनानि ।

पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् ।
वाग्दण्डजञ्च पारुष्यं क्रोधजं व्यसनं मतम् ॥ १ ॥
अविज्ञाताऽन्यदोषस्याऽऽरोपः पैशुन्यमुच्यते ।
साधूनां बधबन्धादावुद्यमः साहसं मतम् ॥ २ ॥
द्रोहो जिघांसा विज्ञेया ईर्ष्याऽन्यगुणदूषणम् ।
असूयाऽन्यगुणे दोषाविष्कारः परिकीर्त्त्यते ॥ ३ ॥
अर्थानामपहारो यो विना दोषेण साध्यते ।
देवानामप्रदानञ्च तदेवार्थस्य दूषणम् ॥ ४ ॥
व्यर्थवाक् कलहश्चैव वाग्दण्डजमुदाहृतम् ।
क्रूरता बन्धुभृत्यादौ पारुष्यं परिकीर्त्त्यते ॥ ५ ॥
सर्व्वे एव महादोषाः परेषां द्वेषहेतवः ।
द्वेषैर्नियुक्ताः पुरुषा विनाशाय कृतोद्यमाः ॥ ६ ॥
धर्म्मार्थकामैर्हीयेत तत्रासक्तो महीपतिः ।
तस्मादेतानि यत्नेन वर्ज्जयेत् क्षेमकामुकः ॥ ७ ॥

दैवजं व्यसनम् ।

कामजं क्रोधजं यादृग् व्यसनं परिकीर्त्त्यते ।
व्यसनं दैवजं तादृग् राज्यसम्पत्तिनाशनम् ॥ १ ॥
निस्पृहा सर्व्वभूतेषु दया धर्म्मरतिः सदा ।
तपः क्लेशो विरक्तिश्च दैवजं व्यसनं स्मृतम् ॥ २ ॥
तत्र सक्तो महीपालो लब्धसत्त्वोदयः सुखी ।
न राजसीं कामयते वृत्तिं विक्षेपकारिणीम् ॥ ३ ॥
क्रोधदम्भादिकं यत्तु राज्यमूलं प्रकीर्त्त्यते ।
तत्सर्व्वं राजसं ज्ञेयं शान्तिः सत्त्वगुणोद्भवा ॥ ४ ॥
दिवारात्रं देवसेवी तद्ध्यायी तत्सुखोदयः ।
रहः कामयते नित्यं तद्धि शान्तेः प्रसाधनम् ॥ ५ ॥
मेलने जनसंघानां वहिश्चरति मानसम् ।
विक्षेपो जायते तस्माद्विषयेषु निरन्तरम् ॥ ६ ॥
विक्षेपः सत्त्ववृत्तीनां प्रतीपः परिकीर्त्त्यते ।
दैवसक्तो नृपस्तस्मात् समाजं नाभिवाञ्छति ॥ ७ ॥
शठा हि समयं प्राप्य हरन्ति धनसञ्चयम् ।
त्यजन्त्यनशना भृत्या अविचारः प्रवर्द्धते ॥ ८ ॥
विषयं विषवत् पश्येत् सत्त्ववृत्त्यभिरञ्जितः ।
तथैव सङ्गिनां लाभो ये शान्ता वीतरागिणः ॥ ९ ॥
राजसिंहासनासीनस्तत्र सक्तिं न चाचरेत् ।
यावत् स्वधर्म्ममात्रं स्यात्तावद् यत्नेन पालयेत् ॥१०॥

कारयेत् सकलं वैद्यं कुशलैः शान्तवृत्तिभिः ।
प्रजानां पालनं राज्ञां परो धर्म्मः परं तपः ॥ ११ ॥
वृद्धे वयसि सम्प्राप्ते भोगजाते लयं गते ।
राज्याभिषिक्तं तनयं कृत्वा शान्तिपथं चरेत् ॥ १२ ॥
यदि चाध्यात्मयोगेन जन्तूनां चेतसां सदा ।
वृत्तीः पश्येद्धराधीशस्तदा कुर्य्याद् यथेप्सितम् ॥१३॥

चक्रमाहात्म्यम् ।

यस्तथ्यवादी धर्म्मात्मा हिताहितविलोककः ।
व्यसनादुद्धृतौ योग्यः स चक्रैस्ताड्यते बलात् ॥ १ ॥
दोषान् सन्दर्श्य शतशश्चक्रैस्तस्य महात्मनः ।
तथा सम्पाद्यते वैरं येन राजा विरागवान् ॥ २ ॥
राजा नाध्यात्मसम्पन्नश्चक्रस्य दुष्टमानसम् ।
तदेको न महान् भूयाच्चक्रेष्वक्षेमवादिषु ॥ ३ ॥
अशने शयने पाने भ्रमणे ये निरन्तराः ।
कथं तैर्न प्रतार्य्यः स्यान्नृपतिर्बोधवानपि ॥ ४ ॥
तेषाम्मतमनादृत्य यदीच्छेत् कर्त्तुमन्यथा ।
नृपः प्राणान् परित्यज्य द्रुतं गच्छेद् यमालयम् ॥५॥
यं पश्येन्नृपतिर्मित्रं पापादस्माद्वि तारकम् ।
गोपनात्तन्मतं नीत्वा चरेत् कार्य्यं समाहितः ॥ ६ ॥
तेनोदासीनभावेन समयं यापयेन्नृपः ।
स चेच्चक्रेण विज्ञातो हतः स्यात्ताड़ितोऽपि वा ॥७॥

सोऽपि सर्वैर्वहिः प्रीतश्छन्नभावेन तत्त्ववित् ।
क्रमादुद्बोधयेच्चक्रं यत्र यादृग् गुणोदय: ॥ ८ ॥
किन्त्वेवं दुर्लभो गेही महात्मा कथमीदृश: ।
गृहस्था धनलुब्धा: स्युर्महात्मानो निरापद: ॥ ९ ॥
यौवनं धनसम्पत्ति: प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय किमु तत्र चतुष्टयम् ॥ १० ॥
यदि रक्षेन्नरेशानमीशान: करुणामय: ।
तदा जीवेत् स चक्रेभ्यो व्यसनेषु महीपति: ॥ ११ ॥
तस्मात् प्रतिष्ठिता: शिष्टा: कुलेन यशसा धनै: ।
विद्यया चरितैर्धर्म्मैर्यैर्भवन्ति नरोत्तमा: ॥ १२ ॥
तेषां समाजमादृत्य सर्व्वकार्य्यनिरीक्षणे ।
स्वयं तन्मतमादाय कुर्य्यात् कार्य्यं समाहित: ॥१३॥
तैरेव कार्य्यं कुर्व्वीत मन्त्रयेद् वेदयेत् कृतिम् ।
कार्य्योपयोगिभिर्दासैर्वेष्टितो दुष्टघातन: ॥ १४ ॥
तेषामाक्रमणे चक्रं यदीच्छेद् दुष्टसाधनै: ।
तदा तन्न विचार्य्यैव दूरं कुर्य्यान्महीपति: ॥ १५ ॥
यैर्भवेत् सर्व्वदा वासो रहस्यालापवेदिभि: ।
तन्मण्डलं भवेच्चक्रं तत्र राजा वशं गत: ॥ १६ ॥
दूरमेव महाचक्रं प्रभुशक्तिं विनाशयेत् ।
सूत्रधारं स्वयं भूत्वा नटवच्चालयेन्नृपम् ॥ १७ ॥

अन्यदस्ति महाचक्रं कार्य्यिणां समवायतः ।
तदप्यधीनं पूर्व्वोक्तचक्रस्य महतो भवेत् ॥ १८ ॥
एतच्चक्रं भयात्तस्मै ददाति स्वहृतस्थनम् ।
अप्रदानेऽमात्यचक्रैः कार्य्यिचक्रं प्रताड्यते ॥ १९ ॥
स्वचक्रेण विना चक्री न क्षणं स्थातुमर्हति ।
तेन सम्पालयेच्चक्रं तेषु कार्य्येष्वनाकुलः ॥ २० ॥
येन यत्साध्यते कार्य्यं तेन तत् प्रतिगृह्यताम् ।
नैकः सर्व्वाणि कार्य्याणि कर्त्तुमर्हति कर्हिचित् ॥२१॥
सर्व्वेषां रञ्जको भूयाद्धनमानादिसम्पदा ।
तथा सन्ताड़येद् यत्नाद् येन मूर्खो न दीप्यति ॥२२॥
अधार्म्मिका भोगसक्ताः परं लोकार्थसाधकाः ।
एत एव महामूर्खा न जड़ो मूर्ख उच्यते ॥ २३ ॥
धर्म्मभीरोर्भीतचित्तात् कृतघ्नात् कुलजाज्जनात् ।
स्वल्पयत्नादपि कार्य्याणि साधयेन्न शठाद्दृढ़ ॥ २४ ॥
शठस्य मेलने शाठ्यं दुर्व्वार्य्यं स्यात् सतामपि ।
वह्निर्धर्म्मो विषं योगात् किं न कुर्य्याद्भयङ्करम् ॥२५॥
सर्व्वकार्य्येश्वरो राजा यतो राज्ञस्ततोऽखिलम् ।
ततः सर्व्वान् जनान् रक्षेत् तत्तत्कार्य्यसमाधिना॥२६॥
भूयः क्रूरतरं कार्य्यं मूर्खेण परिसाधयेत् ।
अन्नपानधनादीनां रक्षणं सत्त्ववृत्तिभिः ॥ २७ ॥

सतां सम्मेलयेन्नित्यमधितिष्ठन् स्वयं सभाम् ।
राक्षसानां पिशाचानां वृत्तिं पश्यन् दिनं नयेत् ॥२८॥
दिनातिपाते सर्व्वेषामधिकारो न चान्यथा ।
सुखदुःखकृता सिद्धिर्दैवमानवरक्षसाम् ॥ २९ ॥
सदा सङ्गोपयेत् तत्त्वं शठेषु धरणीपतिः ।
येनैते न विजानीयुः प्रीतास्तिष्ठेयुराशये ॥ ३० ॥
धनं मानं तथा भोगं दत्त्वा कार्य्यं प्रसाधयेत् ।
विना शठानां संगेन दुर्लभं विषयावनम् ॥ ३१ ॥
सैन्यानामधिपे शिष्टे गुरौ बंधुषु मन्त्रिषु ।
योजयेन्मतिमात्मीयां कार्य्याकार्य्यविधायिनीम्॥३२॥
शठाः स्वुरात्मवृत्तीनामुन्नावेच्छिद्रदर्शिनः ।
भीषयन्तो बलात् तेभ्याप्राहरन्ति धनिनां धनम् ॥३३॥
वेधयन् वड़िशे मत्स्यान् खेलयन् भावसञ्चयैः ।
धरा राज्येऽपि वैराज्यं भजेत् तत्त्वार्थकोविदः ॥३४॥
एवं लोके वशीभूते भोगजातं भजन् सदा ।
दृष्ट्वा नाट्यं जगद्रंगे निरापन्नभतेसुखम् ॥ ३५ ॥

कर्त्तव्यविशेषनिर्णयः ।

यद्राजा शृणुयाद् वृत्तं चाराद् भृत्याज्जितादथ ।
तदन्यं न वदेत् किञ्चित् प्राणैः कण्ठगतैरपि ॥ १ ॥
यदि ब्रूयान्न तं कश्चित् कथयेत् शङ्कितो जनः ।
अश्रुतौ लोकवृत्तस्य वार्त्तं विद्याज्जनेश्वराः ॥ २ ॥

बहवः स्वार्थसम्बाना वञ्चयन्तो नराधिपम् ।
हरन्ति कार्थिणां वित्तं सदा सूचनसाधनैः ॥ ३ ॥
आकारेङ्गितचेष्टाद्यैस्तस्माद्राजा परीक्षयन् ।
पुनरप्यन्यचारेण तद्वृत्तमवलोकयेत् ॥ ४ ॥
प्रायः प्रतिष्ठितं दृष्ट्वा विद्विषन्तो नृपाशयाः ।
सूचयन्ति वृथावादं येन राजा रुषं चरेत् ॥ ५ ॥
परीक्ष्य गुणदोषौ तत् सावधानो जनाधिपः ।
वृथावभाषिणं हन्यात् पालयेत् सत्यवादिनम् ॥ ६ ॥
यावन्तश्चेद् दुराचारा मिलिताः सूचयन्त्यमुम् ।
तदा भूयोऽचिरेणैव राजलक्ष्मीच्युतोभवेत् ॥ ७ ॥
तत एवहि विद्वांसं पालयेत् सादरं सदा ।
प्रायशः कृतविद्या हि न स्युः सूचनतत्पराः ॥ ८ ॥
ये मूर्खा व्यसनोत्साहप्रदातारो निरन्तराः ।
प्रायशः सूचकास्तेस्युः पामराः क्रूरवृत्तयः ॥ ९ ॥

धर्म्मार्थकामसेवा ।

धर्म्मार्थकामान् सेवेत निर्व्विरोधान्महीपतिः ।
विरोधि सर्व्वविद्रावो निर्व्विरोधेऽखिलस्थितिः ॥ १ ॥
विभज्य समयं नित्यं तत्तत्कार्य्यप्रवेदिभिः ।
सर्व्वांस्तानभिसेवेत शुभमिच्छुर्नराधिपः ॥ २ ॥
प्रातर्धर्म्मान् निषेवेत धर्म्मसत्त्वार्थवेदिभिः ।
व्यवहारेषु निपुणैर्मध्याह्ने विषयं भजेत् ॥ ३ ॥

अपराह्ने प्रियैर्मित्रै र्धीरैः कार्य्यविचक्षणैः ।
विविक्तेषु समासीनः कार्य्यं सेवेत भूमिपः ॥ ४ ॥
धर्म्मार्थकाममोक्षाणां केवलं शास्त्रजीविता ।
शास्त्रज्ञानविहीनानां न किञ्चित् परिसिध्यति ॥ ५ ॥
रात्रौ वयस्यसंयुक्तो नृत्यगीतादिमोदितः ।
कामान् सेवेत शुद्धान्ते समयोचितभोगभाक् ॥ ६ ॥
रात्रिशेषे समुत्थाय मन्त्रयन् कार्य्यमात्मनः ।
धर्म्मार्थकामान् सेवेत पूर्व्ववत् सुसमाहितः ॥ ७ ॥

धर्म्मरक्षाफलम् ।

नास्ति धर्म्मात् परं मित्रं नास्ति धर्म्मात् परं धनम् ।
नास्ति धर्म्मात् परं श्रेयस्तस्माद्धर्म्मं सदाचरेत् ॥ १ ॥
दण्डे वा व्यवहारे वा धर्म्म एव महाबलम् ।
सिध्यतस्तावुभौ तेन ह्यन्यथा हानिरेतयोः ॥ २ ॥
समदृष्टिः स्वामिनां हि साक्ष्यदानञ्च पश्यताम् ।
उत्कोचग्रहणं यच्च तद्धि धर्म्मात्तु सिध्यति ॥ ३ ॥
भयेन यदि वा सर्व्वं सिध्येदेतत् कदाचन ।
अन्तरेणान्तरीं शुद्धिं न तत् सर्व्वत्र सिध्यति ॥ ४ ॥
ऐकमत्यस्थापनेषु धर्म्म एव महासुहृत् ।
यस्मात् सर्व्वप्रियो ह्येष सर्व्वसत्त्ववशीकरः ॥ ५ ॥
धर्म्मार्थं सकला लोकाः प्राणानप्युज्झितुं क्षमाः ।
तस्माद्धर्म्मो नरेन्द्राणां मूलं राज्यस्य रक्षणे ॥ ६ ॥

गोपने वञ्चनादिभ्यो रक्षको धर्म्म एव हि ।
अन्तः पापमयं यत्तत् सर्व्वं धर्म्मेण शोध्यते ॥ ७ ॥
यथा यथा च धर्म्मस्य विनाशः परिजायते ।
तथा तथा मनुष्याणां शाठ्यचौर्य्यादि वर्द्धते ॥ ८ ॥
वर्द्धने दुष्टवृत्तीनां केवलं दण्डसाधनैः ।
शोधनं दुष्करं राज्ञा कृत्वा यत्नशतान्यपि ॥ ९ ॥
वर्द्धने पापवृत्तीनां सत्प्रवृत्तिर्विनश्यति ।
उच्छृङ्खला जना भूत्वा धावन्ति स्वेच्छया सदा ॥१०॥
कौशलात् परवस्तूनि हरन्ति मनुजाः सदा ।
वाणिज्यं कृषिकर्म्मापि व्यवहारश्च नश्यति ॥ ११ ॥
व्यभिचारादयो दोषा प्रभवन्ति गृहे गृहे ।
जायन्ते सङ्करा लोका हीनबोधा हतत्विषः ॥ १२ ॥
सख्यं भक्तिर्दया शान्तिः सत्यादि परिनश्यति ।
हिंसा स्तेयं दुराचारो दुःस्वभावः प्रवर्त्तते ॥ १३ ॥
यथा तथा विधानेन मानवाः स्वार्थतत्पराः ।
उपद्रवन्ति मनुजान् स्वयं नश्यन्ति शर्म्मतः ॥ १४ ॥
केवलं जनसङ्घेषु दोषवह्निः प्रवर्द्धते ।
दह्यन्ते मानवास्तेन निःसहाया दिवानिशम् ॥ १५ ॥
तस्माद् यत्नेन नृपतिर्धर्म्मसेवी निरन्तरम् ।
धर्म्मान् रक्षेन्मनुष्याणां यथा यस्य प्रवर्त्तते ॥ १६ ॥

यदि धर्म्मं न सेवेत स्वयं राजा विमार्गगः।
कथं रक्षेत् स लोकानां धर्म्मं यत्नशतैरपि ॥ १७ ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ १८ ॥
देशे कुले मनुष्याणां धर्म्मो यस्य यथा यथा।
रक्षणीयः प्रयत्नेन सर्व्व एव शुभावहः ॥ १९ ॥

सर्व्वैकधर्म्मासम्भवः।

येषां मतेतु सर्व्वेषां धर्म्माणां परिनाशतः।
एको धर्म्मो विधातव्यस्ते मूढ़ा हतबुद्धयः ॥ १ ॥
प्रथमं सर्व्वधर्म्माणामुच्छेदे विप्लवो महान्।
नाशयन्तं समाक्रम्य कुरुते प्राणसंशयम् ॥ २ ॥
श्रद्धा मूलं हि विश्वासे बलोद्भूता न सा क्वचित्।
विश्वासेन विना धर्म्मो न पुनः फलदो भवेत् ॥ ३ ॥
यदि वीर्य्येण लोकानामेको धर्म्मः क्रमात् स्थिरः।
तथापि मानवाः सर्व्वे नाधीना भिन्नवृत्तयः ॥ ४ ॥
चित्तभेदेन लोकानां बुद्धिवृत्तिर्विचित्रगा।
एकस्याविमतोऽन्यस्य ग्राह्यो धर्म्मः पृथक् पृथक् ॥५॥
कश्चिद् गृह्णाति परमं व्यापकं ज्ञानविग्रहम्।
कश्चिद् गृह्णाति परमं सुन्दरं मूर्त्तिभाजनम् ॥ ६ ॥
रसभेदेन लोकानां चित्तवृत्तिस्तथा पृथक्।
वात्सल्यवीरशृङ्गारकारुण्यादिप्रिया यतः ॥ ७ ॥

स्वभावो दुरतिक्रम्यः सर्व्वेषां मूर्द्ध्नि वर्त्तते ।
स्वभावाच्चालनं लोके कथञ्चिन्नतु सिध्यति ॥ ८ ॥
चक्षुर्गृह्णाति रूपाणि रसना रसिका रसे ।
वैपरीत्यं न गृह्णीत ताभ्यां यत्नशतैरपि ॥ ९ ॥
एकधर्म्मप्रचारेऽपि नैकस्मिन् सम्पदां स्थितिः ।
एकधर्म्मेऽपि किं राजा हन्यते न परैः क्वचित् ॥१०॥
अस्माकमिति बुद्धिस्तु सत्स्वन्येषु प्रिया भवेत् ।
सर्व्वैकमते सातु स्वमात्रपरिणामिनी ॥ ११ ॥
पिता यत्र सुतं हन्ति सुतोऽपि पितरं तथा ।
तद्राज्यार्थं क्व बन्धोऽस्ति धर्म्मस्य सुखलोभिनाम् ॥१२॥
भिन्नधर्मेषु राजत्सु किं न राजा स्थितिं गतः ।
तस्माद्धर्मविनाशेन लोकस्योत्पीड़नं वृथा ॥ १३ ॥
राज्यमेतन्नरेशानां महतां तपसां फलम् ।
तपोनाशे विनष्टं स्यात्तपःसत्त्वे विराजते ॥ १४ ॥
अतीता बहवो भूपा भवन्ति बहवोऽपि च ।
भाविनो बहवस्तस्मात् कीर्त्तिरेका चिरं स्थिरा॥ १५॥
येन नोत्पीड्यते लोकः स्वस्वधर्म्माविरोधतः ।
स राजा पालको लोके मृतोऽपि चिरजीवनः ॥१६॥
तस्मिन् मृतेऽपि तद्राज्ये विनष्टे समयादपि ।
भजन्ते तत्कुलं लोकास्तद्भक्तिकृतबन्धनाः ॥ १७ ॥

रतिः सर्वस्य तत्र स्यान्नष्टराज्यं चरेत् पुनः ।
सर्वेषां लोकचक्राणामसाध्यं किं प्रवर्त्तते ॥ १८ ॥
यतोऽभ्युदयसंसिद्धिस्तदेव शुभसाधनम् ।
इति विज्ञाय मुनिभिः कृता धर्मस्थितिः पुरा ॥१९॥
अतएव यथाकालं यथादेशं यथावयः ।
यथासात्म्यं यथाज्ञानं यथारुचि यथोद्यम ॥ २० ॥
तथैव जनसंघानां धर्मतत्वं व्यवस्थितम् ।
नानारूपभृता नानादेशेषु परमात्मना ॥ २१ ॥
ये यथा धर्मवक्तारो लोककल्याणसाधनाः ।
ते सर्वे प्राकृतानैव देवदेवस्य भूतयः ॥ २२ ॥
यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्ज्जितमेव वा ।
तत्तदेव हि विज्ञेयं भगवद्भूतिकल्पितम् ॥ २३ ॥
अयमेव परो धर्म्मो नान्यः श्रेयान् मतिस्त्वियम् ।
भ्रान्तानामेव को विद्याद् धर्मतत्त्वं सुदुर्गमम् ॥२४॥
ये यथा यं प्रपद्यन्ते येन भावेन मानवाः ।
सर्व्वं एव परं देवं भजन्ते तं न चापरम् ॥ २५ ॥
अणुम्वा स्थूलरूपम्वा व्यापकम्वा निराकृतिम् ।
को जानाति परं देवं यन्मायामोहितं जगत् ॥२६॥
नास्त्यन्तो जगतो ह्यस्य दुर्निरूप्याकृतिः सदा ।
कर्त्ताऽस्य कीदृशः कस्य मतिरेषाभवेत् स्थिरा ॥२७॥

कया शक्त्येन्द्रियाणीत्थं गृह्णन्ति विषयान् सदा ।
वैपरीत्यान्न गृह्णन्ति यो द्रष्टा स कथं मतः ॥ २८ ॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
न विज्ञाता हि विज्ञातेर्विज्ञेयः स्यात् कथञ्चन ॥२९॥
सम्बन्धबन्धो लोकानां महानीतिर्महाफला ।
स एव धर्मसम्मूलो धर्म्मः कर्म्मानुगः सदा ॥ ३० ॥
देशज्योतिष्कपानान्नपवनादिसमाश्रितम् ।
पवित्रं देहभृत् कर्म्म बुधैः पूर्व्वं व्यवस्थितम् ॥३१॥
वर्त्तमाने स्वात्मनो वा सुखमात्रमवेक्ष्य यः ।
कुरुते धर्म्मविद्रोहं कुलघाती स राक्षसः ॥ ३२ ॥
चिरसम्बाहिसम्प्रीतिस्वाधीन्यस्वास्थ्यरक्षकः ।
कुलादिभेदे धर्म्माणां विशेषः कथितः पुरा ॥ ३३ ॥
अज्ञानाद्यदि वा द्वेषादनुरागान्निषेवणात् ।
पक्षपातेऽपि चैकत्र तत्त्वाद्धर्म्मौ विविच्यताम् ॥३४॥
मिलित्वा भिन्नधर्म्मैस्तु अकापट्येन भाषयन् ।
फलहेत्वादि सम्पश्यन् धर्म्मं रक्षेत् सनातनम् ॥३५॥

धर्म्मोच्छेदिदण्डः ।

धर्म्मनाशे हि ये दोषास्ते पुरा परिकीर्त्तिताः ।
अतस्तन्नाशका दण्ड्याः सर्व्वोपद्रवकारिणः ॥ १ ॥
आपाततो यदि प्रीतिर्द्धर्म्मलोपेऽवलोक्यते ।
विचारे चरमे तत्र परं दोषो न वै गुणः ॥ २ ॥

धर्मनाशे जातिनाशो जातिनाशे यथा तथा ।
उद्वाह्य मानवाः कामाज्जनयन्त्यबलान् सुतान् ॥३॥
ये हीनवीर्य्या दुश्चेष्टा दुर्बोधा दुष्टचेतसः ।
अयथायुःसमायुक्ता जाता नश्यन्ति वा पुनः ॥ ४ ॥
लवणे वोषरक्षेत्रे सद्बी नोत्पादमर्हति ।
सद्बीक्षेत्रे न वाकेन्दुर्जायते यत्नसञ्चयैः ॥ ५ ॥
जातो वा नाशमायाति जीवितो वा न वीर्य्यवान् ।
वीर्य्यवान् न फलं सूते सूते वा न फलं तथा ॥ ६ ॥
सिद्धक्षेत्रा सुप्रशस्ता एवं कुलपरम्परा ।
एतद्घातप्रवृत्ता ये घातकास्ते न कस्य वै ॥ ७ ॥
एवमन्नरसो लोके विहितो धर्म्मवेदिभिः ।
यथादेशं यथाशक्यं यथादेहं यथाऽनिलम् ॥ ८ ॥
एतन्नाशे महादोषा रोगिभ्यो वीर्य्यदूषणम् ।
दोषाद्धीनबला लोका दुःखवन्तः पदे पदे ॥ ९ ॥
एतद्बुद्ध्वा बुद्धिमद्भिर्दृष्ट्वा लोकेष्टसंस्थितिम् ।
धर्म्मो रक्ष्यः प्रयत्नेन ये यथा सन्ति यत्र वै ॥ १० ॥

धर्म्माचार्य्यरक्षणम् ।

ये यथा धर्म्मतत्त्वज्ञाः पूताः शान्तात्मवृत्तयः ।
विभज्य रक्षणीयास्ते धनमानार्च्चनादिभिः ॥ १ ॥
नियुक्तास्ते यथा ब्रूयुरधिकारानुसारतः ।
धर्म्मतत्त्वं यथा लोकाः स्वधर्म्मस्था निराकुलाः ॥ २ ॥

श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥ ३ ॥
अधिकारमनालोच्य यदि धर्म्मं चरेन्नरः ।
क्षेमात् प्रच्युतिमासाद्य दुःखभाक् स्यात् पदेपदे ॥४॥
अतोऽधिकारं सन्त्यज्य यः कुर्य्याद् यश्च भाषते ।
स्यातामुभौ दण्डनीयौ लोकभ्रंशकरौ खलौ ॥ ५ ॥
धर्म्माचार्य्ये रक्षणीये सुलभो लोकसंग्रहः ।
विनायासं सुसिध्यन्ति सुविचाराश्च नित्यशः ॥ ६ ॥
यदि कश्चिच्चिराचारः समयान्न फलप्रदः ।
परिवर्त्त्योऽथवात्याज्य एषा धर्म्मभृतां गतिः ॥ ७ ॥
युगे युगे मनुष्याणां धर्म्माचारादिकं पृथक् ।
परिवृत्तं कृतं त्यक्तं बहुशस्तत्त्वदर्शिभिः ॥ ८ ॥

विषयदर्शनम् ।

सर्व्वविद्यासु निपुणैः सर्व्वभाषार्थकोविदैः ।
सर्व्वेषां व्यवहारज्ञैः सद्वृत्तैः कुलशालिभिः ॥ १ ॥
अमात्यैर्मन्त्रिभिर्धीरैः सेनाध्यक्षैर्महत्तमैः ।
प्राड्विवाकैर्याभिकैश्च शिष्टैश्च धनिभिर्वृतः ॥ २ ॥
सिंहासनसमासीनो वीरवेशसमुज्ज्वलः ।
यथास्थाने निवेश्यैतानर्थान् सेवेत भूमिपः ॥ ३ ॥
केन किं क्रियते कार्य्यं व्यवहारेषु तिष्ठताम् ।
रक्ता वा सकला लोका विरक्ता वा स्वशासने ॥ ४ ॥

उपद्रवो वर्द्धते वा प्रशान्तो वा जनाश्रयः ।
राज्याङ्गानां समृद्धिर्वा विनाशो वा दिने दिने ॥ ५ ॥
स्वधर्मनियता लोकाः किम्वा धर्म्मपराङ्मुखाः ।
शत्रुभिर्मिलिताः किम्वा किम्वा तन्नाशकामिनः ॥६॥
शठदस्युतस्करात्द्या वर्द्धन्ते वा लयं गताः ।
सुविचारो जनपदे निर्विचारोऽथवा पुनः ॥ ७ ॥
वाणिज्यकृषिकर्म्मादि प्रोज्ज्वलम्वाप्यनुज्ज्वलम् ।
पशुरत्नादिकं सर्व्वं जायते वा न जायते ॥ ८ ॥
विद्यया वर्द्धिता लोका मूढ़ा वालसवृत्तयः ।
शान्ता वा शत्रवो वृद्धा व्याधिर्वा शान्तिरेव वा ॥९॥
श्रवणेनानुमानेन प्रत्यक्षेण नराधिपः ।
तत्त्वं विज्ञाय सर्वेषां कुर्य्यात् कार्य्यं समाहितः॥१०॥
अचैव व्यवहारज्ञैः कार्य्यार्थिभिरुपागतैः ।
प्रेरितैरन्यभूपेन व्यवहारं समाचरेत् ॥ ११ ॥

अनभिभूतिः ।

अनाक्रम्यो जनैर्भूयान्नृपतिः स्वानुजीविभिः ।
आक्रमः प्रभुशक्तीनां नाशकः सर्वनाशकृत् ॥ १ ॥
शक्तिनाशे नरेशानस्तृणवल्लघुजीवनः ।
उत्सार्य्यते बलादेव वात्ययेव तृणं क्षणात् ॥ २ ॥
नानालिङ्गधरा दुष्टा नानाचातुर्य्यदर्शकाः ।
नाना प्रीतिकरा नित्यं नाना साधनतत्पराः ॥ ३ ॥

मोहयन्ति नरेशानं साधयन्ति स्वसम्पदम् ।
तस्मात् कुत्रापि नो मोहं सहसा सञ्चरेन्नृपः ॥ ४ ॥
यः सर्वदा स्वबुद्धीनां तत्त्ववेत्ता प्रदर्शकः ।
स बलान्मोहयेद् भूपं देवरूपो दुरासदः ॥ ५ ॥
तत्राभिभूतिर्भूपानामिहचामुत्र भद्रदा ।
किन्त्वेवं दुर्लभो लोके सर्वे विषयसङ्गिनः ॥ ६ ॥

प्रभुत्वरक्षोपायः ।

स्वजने तादृशीं प्रीतिं विदध्यात् सुसमाहितः ।
यथा ते प्रोज्झता न स्युर्वशे तिष्ठेयुरीप्सिताः ॥ १ ॥
प्रीतिं कुर्य्याद्भयं दद्यान्न प्रीतिं न भयं परम् ।
अतिप्रीतिर्भयं दद्यादतिभीतिर्विनाशकृत् ॥ २ ॥
तथा सन्ताड़येच्चक्रं येन बद्धं न तद्भवेत् ।
चक्रबन्धो नरेशानां सर्व्वनाशकरः स्मृतः ॥ ३ ॥
प्रीतिं विधाय चक्रेषु परस्परनिरीक्षणे ।
परस्परं नियुञ्जीत गोपनात् सुसमाहितः ॥ ४ ॥
अहमेव मतो राज्ञो येन सर्वेषु धीरियम् ।
उत्पन्ना राजकार्य्यार्थं प्रत्येकं वशमानयेत् ॥ ५ ॥
अकार्य्यं क्रियते चेन्मे ज्ञात्वा राजा परित्यजेत् ।
एवं भीतिः समुत्पन्ना सर्व्वदा ताड़येद् यथा ॥ ६ ॥
सम्भाषणं स्मितालोकः कार्य्येषु विनियोजनम् ।
मन्त्रणं दानमुत्साह उपाया लोकरञ्जने ॥ ७ ॥

विश्वासादिव्यवस्था ।

नाचरेदतिविश्वासं नाविश्वासं समाचरेत् ।
इयमेव क्षितीन्द्राणां राज्यसम्पत्तिनाशकृत् ॥ १ ॥
यदि स्यादतिविश्वासी प्रतीपः कालयोगतः ।
तदा निहन्याद्राज्येन प्राणानपि महीभृताम् ॥ २ ॥
शत्रुता मित्रता वापि स्वभावान्न व्यवस्थिता ।
कार्य्येण शत्रुर्मित्रं स्यान्मित्रम्वा शत्रुतामियात् ॥३॥
प्रायशो धरणीशानां द्वेष्टारः सकला जनाः ।
इष्टालाभादवज्ञानात् सेवनात्ताड़नात्तथा ॥ ४ ॥
तथापि यत् प्रकुर्वन्ति कार्य्याणि शिष्टवृत्तयः ।
असामर्थ्याच्छिन्नवृत्ता रुद्धा व्याघ्रा इवाचलाः ॥ ५ ॥
ये चापि मित्रतां यान्ति ते पुष्टा धनलाभतः ।
कार्य्याभावे धनालाभे को बन्धुर्धरणीभृताम् ॥ ६ ॥
नैवं कश्चिद्वर्त्तेत प्रायशो राजसेवकः ।
योऽनमत्त्वं न कुरुते द्वेषं कार्य्यस्य भूभृतः ॥ ७ ॥
अतिविश्वासयोग्याश्चेद्धनलुब्धा नराः कथम् ।
न हरेयुः समग्राणि शान्तिः कस्य धनार्ज्जने ॥ ८ ॥
अविश्वासे सदाराज्ञां न कश्चित् कार्य्यतो हितः ।
हिताभावेन राजैकः कथं सर्वं सुसाधयेत् ॥ ९ ॥
शत्रुर्य्यदि भवेन्मित्रं कार्य्यतः समयात् क्वचित् ।
सर्वथा नैव विश्वास्यः शत्रुताऽनलदग्धहृत ॥ १० ॥

शत्रुता समयं प्राप्य मैत्रं दग्ध्वा विनाशयेत् ।
भस्मनाच्छादितो वह्निस्तृणं प्राप्य यथोज्ज्वलः ॥ ११ ॥
मित्रं यदि भवेच्छत्रुर्न विश्वास्यस्तु तादृशम् ।
कदाचित् संस्मृता मैत्री शमयेद्धृदयाऽनलम् ॥ १२ ॥
सुवर्णं वह्निदाहेन प्रकृतिं न परित्यजेत् ।
तत्कालमुष्णतामाप्य पुनः शैत्येन युज्यते ॥ १३ ॥

मित्रव्यवस्था ।

स्वराज्ये परराज्ये वा स्वधर्म्मे वान्यधर्म्मके ।
संस्थिता व्यवहारज्ञाः क्रमादुन्नतिमाश्रिताः ॥ १ ॥
कुलीना ज्ञाततत्त्वा वा विद्वांसो वा बहुश्रुताः ।
अविगीता माननीया बहुज्ञा बहुकारिणः ॥ २ ॥
स्थिरप्रज्ञा मन्त्रदक्षा धार्म्मिकाः पापशङ्किताः ।
ये भवन्ति नरश्रेष्ठा धनमानसमुज्ज्वलाः ॥ ३ ॥
रहस्तैर्मेलनं कृत्वा निःशाठ्यं मित्रतावशः ।
यावत् स्ववृत्तिमुद्भाव्य तेषां वृत्तिमुपाददत् ॥ ४ ॥
एकात्मभावमाश्रित्य नचान्यैर्ज्ञातसंस्थितिः ।
ज्ञात्वा तत्त्वं समस्तानां परस्परविलोकितम् ॥ ५ ॥
गुणदोषौ रहः सर्वैर्विचार्य्य समदृष्टितः ।
कुर्य्यात् कार्य्यं महीशानः स्वराज्यस्थितिलिप्सया॥६॥
एत एव महामात्याः साधनीयाः परीक्षया ।
यदेकस्य तदन्येषामस्मिन्नेव विराजते ॥ ७ ॥

स्वबुद्धिबलसम्पन्ना यत्र तत्र स्थिता जनाः ।
उत्कृष्टाः सम्भजन्ते ये न वार्य्यास्ते कथञ्चन ॥ ८ ॥
ते बहुज्ञाः कार्य्यदक्षा नानोपायविलोकका: ।
बहुविघ्नहरा नित्यं बहुसम्पद्विवर्द्धकाः ॥ ६ ॥
तस्मात्तान् बहुमानाद्यैः सख्ये संयोजयेन्नृपः ।
राज्यमेतन्नचैकस्य सर्व्वेषां भाग्यशालिनाम् ॥ १० ॥
अन्येऽपि बहवोऽमात्याः स्वस्वकार्य्ये प्रकीर्त्तिताः ।
भवन्ति परिणश्यन्ति नैते नश्यन्ति कर्हिचित् ॥ ११ ॥

कार्पण्यादिव्यवस्था ।

न तथा कृपणो भूयान्नातिदाता भवेन्नृपः ।
इयमेव निषेवेत कार्य्याणामनुरोधतः ॥ १ ॥
व्यसनेऽन्यकृते शाध्ये कार्पण्यं सुसमाचरेत् ।
उत्साहे लोककल्याणे दानं राज्ञां शुभावहम् ॥ २ ॥
लोकानुत्पीड्य दानानि न्याय्यमग्राह्य दीनता ।
इयमेव नरेन्द्राणां कुशलं हन्ति सर्वथा ॥ ३ ॥
उत्पीड़नेन लोकानां सन्ताप उपजायते ।
सन्तापात् शत्रुतां प्राप्य यतन्ते राज्यनाशने ॥ ४ ॥
न्याय्यादाने जना विद्युर्वीर्यहानिं महीभृताम् ।
न भजन्ते ततो दण्डान् दण्डाभावे कुतो नृपः ॥५॥

शायनिकादिव्यवस्था ।

शयने भोजने चैव सुविश्वस्तान् नियोजयेत् ।
ये प्रीतिधनसन्तुष्टाः पश्येयुः प्राणवन्नृपम् ॥ १ ॥

चिकित्सकान् नियुञ्जीत विश्वस्तान् कुलजान्हितान्।
ये हि लुब्धाः परैःप्रेष्या न हन्युर्नृपजीवनम् ॥ २ ॥
एतेषामेव हस्तेषु सुलभं नृपजीवनम् ।
तस्मात्तान् स्वच्छभावेन पालयेत् पृथिवीपतिः ॥ ३ ॥
तथापि शयनागारे स्वात्मरक्षां समाचरेत् ।
येन ते सहसा न स्युरीप्सितेऽपि विनाशकाः ॥ ४ ॥
स्वयं शस्त्रवतो नित्यं स्थापयेद् दूरतो जनान् ।
कार्यें भवन्ति सुलभा स्वापे नाक्रामका यथा ॥ ५ ॥
औषधं भोजनञ्चापि परीक्ष्याग्रे जनार्पणात् ।
स्वयं भुञ्जीत कालेन नृपतिः शुभकाम्यया ॥ ६ ॥
अथवा जननीदारपरमाप्तकराश्रयात् ।
कुर्व्वीत भोजनं राजा निःशाठ्यं प्रीतिदर्शकः ॥ ७ ॥
नास्ति राज्यसमं भोग्यं नास्ति राज्यसमं विषम् ।
तत्र प्रीतिं यथा कुर्य्यात् तथा भीतिं समाश्रयेत् ॥८॥
शतशः प्राणहन्तारः क्रूराःप्रच्छन्नवृत्तयः ।
वसन्ति विषये नित्यं ताड़िताः परिभाषिताः ॥ ९ ॥

अर्थसंग्रहः ।

एकतोऽशनिचेताः स्यादन्यतोऽर्थं प्रसाधयेत् ।
यथाह्मान्तिसमुत्पादे निर्यांति कमला करात् ॥ १ ॥
ये ऽर्जका बहुवित्तानां तेभ्यो वित्तप्रसाधनम् ।
स्वल्पेऽपराधे तीक्ष्णेन विधिनाऽन्याय्यमुच्यते ॥ २ ॥

स्वभावाज्जातवस्तूनां कर्त्तव्यो भूरिसङ्ग्रहः ।
श्रमेण जातवस्तूनां श्रान्तानां जीविकार्पणात् ॥ ३ ॥
वणिजां बहुवित्तस्य साधकानां बहुग्रहः ।
यतस्तेषां रक्षणाय राज्ञां यत्नश्शतं सदा ॥ ४ ॥
यत्र पश्येत्सुचतुराश्चातुर्य्याद्बहुसाधकाः ।
तत्र ग्राह्यं महद्वित्तं नात्र कार्य्या विचारणा ॥ ५ ॥
एवं यथा यथा पश्येत् यथाहेतुर्धनागमः ।
उत्पीड़नं विना राज्ञा धनं ग्राह्यं ततस्तथा ॥ ॥
विपत्तौ लोककल्याणे देशाध्यक्षैर्विचारयन् ।
समर्थाद्धनमादद्यात् न दीनान् पीड़येत् क्वचित् ॥७॥
स्वेच्छातो न धनं कश्चिद् दातुमर्हति मानवः ।
तस्मान्मैत्रेण मानेन मोहयन् धनमर्ज्जयेत् ॥ ८ ॥
विना कार्य्यं न कर्त्तव्यं केवलं कोषपूरणम् ।
यद्यच्चास्त्यखिलं तद्धि कार्यपाते महीभृतः ॥ ९ ॥
तस्मात् सम्पोषयन् नित्यं धनमानादि सम्पदा ।
राज्यरक्षाकरं द्रव्यं विविच्य परिसाधयेत् ॥ १० ॥
पूर्णकोषेऽपि चेद्राजा हतराज्यो भवेत्तदा ।
किम्भवेत् कोषसम्पूर्त्या केवलं परहेतवे ॥ ११ ॥

भृत्यसञ्चालनम् ।

सेवयेत् सेविनं नित्यं कार्यिणं कारयेत् कृतिम् ।
तत्र तेषां क्रियां दृष्ट्वा त्यजेद्रक्षेच्चवर्द्धयेत् ॥ १ ॥

स्वकार्येष्वलसस्त्याज्यो रक्ष्यः कार्यस्य पालकः ।
तत्र नैपुण्यदृष्ट्या तु वर्द्धनीयः शनैः शनैः ॥ २ ॥
शिक्षादानं सकृद्दोषे दण्डरोधादिना नृणाम् ।
पौनःपुन्ये परित्यागस्त्याग एष बहुमतः ॥ ३ ॥
उत्साहदानं लेख्येन तोषणं प्रियभाषणैः ।
समये च पुरस्कारो रक्षणं बहुधा मतम् ॥ ४ ॥
वर्द्धनं भूमिरत्नादि दानमुन्नतिवर्द्धनम् ।
तोषलेख्यार्पणं सभ्ये योजनं मानवर्द्धनम् ॥ ५ ॥
कार्य्यिणां चिरसान्निध्यं य इच्छति नराधिपः ।
स स्वकार्य्यं स्वयं हत्वा चालयेच्चपलां श्रियम् ॥ ६ ॥

मन्त्रविधानम् ।

सम्पत्तौ वा विपत्तौ वा यदा यत्कर्त्तुमिच्छति ।
तदा मन्त्रो विधातव्यस्तत्कार्य्यनिपुणैरहः ॥ १ ॥
तात्कालिकौ भाविभूतौ गुणदोषौ विचारयन् ।
गुणाधिक्ये विदध्यात्तद्दोषाधिक्ये परित्यजेत् ॥ २ ॥
कर्त्तव्येषु स्थिरो भूत्वा मण्डलेषु प्रवेदयेत् ।
तेषां तत्र मतं लब्ध्वा नियमं चालयेन्नृपः ॥ ३ ॥
उद्भाव्यते दूषणञ्चेत्तत्रतैर्युक्तिदर्शनात् ।
मन्त्रितान्यपि कार्य्याणि सन्त्यजेत् पृथिवीपतिः ॥४॥
नोद्भाव्यते स्वयं राज्ञा प्रजाभिश्चेन्निवेद्यते ।
तदपि स्थापयेद् यत्नाद्धितकार्य्येष्वनाग्रही ॥ ५ ॥

चलितान्यपि कार्य्याणि क्लेशाय यदि कालतः ।
त्यक्तव्यानि प्रयत्नेन तत्र नाग्रहमाचरेत् ॥ ६ ॥
विरुद्धमपि संसेव्यं यदि सर्वजनप्रियम् ।
अविरुद्धमपि त्याज्यं यदिस्यात्तापकं नृणाम् ॥ ७ ॥
नरा एव नरेन्द्राणां राज्यस्थापकनाशकाः ।
तस्मात्ते सततं रक्ष्या दारैःपुत्रैर्धनैरपि ॥ ८ ॥
कालाद्बहूनि कार्य्याणि फलन्ति विफलन्ति च ।
यस्मात् कालेन लोकानां वृत्तिभावादि चित्रता ॥९॥
वर्त्तमानेऽपि लोकेऽस्मिन् वाल्ययौवनवृद्धताः ।
जनयन्ति नवां वृत्तिं तेषु रागादिषु क्रमात् ॥ १० ॥
कालेन कर्षितं भूतं हीनवीर्य्यं प्रजायते ।
हेतुशक्तिमुपाश्रित्य सर्वं कार्य्यं प्रवर्त्तते ॥ ११ ॥
यादृग् वृत्तिमवेक्षेत काले लोकस्य भूमिपः ।
तत्साधनसमर्थानि कार्य्याणि विनियोजयेत् ॥१२॥
मन्त्रप्रकाशी प्रच्छन्नो मन्त्रश्रोतास्य दूषकः ।
दण्डाल्लोभात् पक्षपातान्मन्त्रकारी विवर्ज्यताम् ॥१३॥
गोपनात्साधितो मन्त्रः फलं दद्याद् यथेप्सितम् ।
प्रकाशे कार्य्यहानिः स्यात् तन्मन्त्रं न प्रकाशयेत् ॥ १४ ॥
कारणं कार्य्यमात्रस्य विरोधस्य विराजते ।
प्रकाशे साध्यते दिष्टे रोधो येन न तद्भवेत् ॥ १५ ॥

शान्त्यादिव्यवस्था ।

न शान्तः क्रोधनो भूयात् शान्तः क्रोधी भवेन्नृपः ।
तावुभौ नाशकौ स्यातां पालकौ च महीभृताम् ॥१॥
क्रोधो दुष्टप्रतीपेषु शान्तिः शिष्टसुहृत्सु च ।
वैपरीत्यं न कर्त्तव्यं वैपरीत्याद्विनश्यति ॥ २ ॥
नियुक्तानां तथा वाक्ये न क्रुद्धः स्यान्महीपतिः ।
क्रोधे न तथ्यं विज्ञेयं तथ्याभावे कुतः स्थितिः ॥३॥
न शान्तिः प्रोद्धते शत्रौ सर्वेषाञ्च विरोधके ।
अवज्ञायिनि कार्यस्य दस्यौ चौरे तथा शठे ॥ ४ ॥

कर्त्तव्यविधिः ।

सहसा न चरेत् कार्य्यं वीक्ष्य कुर्य्याद्विवेकतः ।
असमीक्ष्य कृतो दोषाः समीक्ष्य कृतिनो गुणाः ॥१॥
मूढानां ताड़नाद् भूपः कार्यिणां व्यवहारतः ।
विदुषां प्रणयाद् भक्त्या साधयेत् कार्यमात्मनः ॥ २ ॥
सर्व्वानेव परीक्षेत कार्य्याणामवलोकनात् ।
परीक्ष्य गुणदोषौ हि ताड़येद्वापि वर्द्धयेत् ॥ ३ ॥
उदासीन इव स्वामी कार्ये संयोजयेज्जनान् ।
येन ते सततं विद्युः स्वातन्त्र्यं स्वस्य सर्वदा ॥ ४ ॥
अस्माकमिहकर्त्तव्ये नाविश्वासो महीभृताम् ।
करवाम वयं यादृक् तथा सम्प्रत्ययेन्नृपः ॥ ५ ॥
एवं विश्वास्य कार्य्येषु परीक्षेत नराधिपः ।
पुनः पुनर्ज्ञाततत्वस्तथ्यवित् स्यान्निदेशिनाम् ॥ ६ ॥

सन्त्येवं वहवो दुष्टाः कार्य्यार्थं साधुवृत्तयः ।
कार्य्यं लब्ध्वा सुविश्वस्ता जनयन्ति महद् भयम् ॥७॥
तस्मान्नियोज्य कार्य्येषु सर्व्वदादुष्टवृत्तिकः ।
भूयाद् येन सुविश्वस्ता ज्ञाततत्वा निराकुलाः ॥८॥
सत्यवृत्ता वञ्चका वा स्वकार्य्येषु नियोजिताः ।
इति ज्ञातुमना राजा नियमं सञ्चरेदिमम् ॥ ९ ॥
परोक्षे तद्गृहे चारं प्रेषयन् प्रतिवेशिभिः ।
कार्य्योपयोगिनी बुद्धिरधिका वेति मन्यताम् ॥१०॥
अथवा गणिकागारे द्यूतागारे मदालये ।
प्रेषयेत् तत्त्वमन्वेष्टुं सुविश्वस्तं चरं नृपः ॥ ११ ॥
आन्तरीणां हि वृत्तीनां यथावदवभासने ।
यथा कषोपलं हेम्नस्तथैतत् पदमीच्यते ॥ १२ ॥
लोकानां वाक्यमात्रेण न जह्यात् स्वं निदेशिनम् ।
चरित्रमवगम्येत्थं पालयेद्वा त्यजेत् पुनः ॥ १३ ॥
प्रायः प्रतिष्ठितं दृष्ट्वा विद्विषन्ति जनाः सदा ।
चक्रवद्वा येन न स्यादचिरात् पदविच्युतः ॥ १४ ॥
गूढचारेण यः स्वामी न तत्त्वं वेत्ति कार्यिणाम् ।
अचिरेणैव कालेन सम्पदः स च्युतो भवेत् ॥ १५ ॥
वहिः सद्वृत्तिमालोक्य नविश्वासं समाचरेत् ।
प्रायशो वञ्चकाः पापा वहिः सद्वृत्तिशालिनः ॥१६॥

वञ्चका वाद्कुशला वागाडम्बरतत्पराः ।
वञ्चयन्ति नरेशानं सदा मधुरभाषणैः ॥ १७ ॥
साधवो विफलालापविरता न्यायवादिनः ।
नाधिकाराय कल्प्यन्ते जड़वद्बोधिताः शठैः ॥ १८ ॥
गुप्तचारेण यः पश्येद् वृत्तं लोकस्य भूमिपः ।
साधून् साधून् विजानीयाद् दुष्टान् दुष्टान्नचान्यथा ॥ १९ ॥
गुणदोषौ समालोक्य कार्य्यभारं समर्पयेत् ।
साधवे सत्यवृत्ताय दुष्टान् सन्ताडय यत्नतः ॥ २० ॥
सद्वृत्ते कार्य्यनिक्षेपो रत्नसंस्कारवत् क्षणात् ।
लभते परमां शोभां स्वामिनं भूषयत्यपि ॥ २१ ॥
कृत्वापि पदसंरूढं नित्यं नित्यं परीक्षयेत् ।
सद्वृत्तोऽपि धने लोभाद् दुर्वृत्तो जायते क्रमात् ॥ २२ ॥
सर्व्वथा गुणसम्पन्नो दुर्लभो विषयोत्सुकः ।
कार्य्योपयोगिनं तस्माद् गुणं दृष्ट्वा नियोजयेत् ॥ २३ ॥
यं कुर्य्यादतिसम्पन्नं तस्मिन् सर्व्वं परीक्षयेत् ।
महाधिकारिणो दोषो महोपद्रवकारणम् ॥ २४ ॥
एकस्य वाक्यमादाय योऽन्यं ब्रूते नराधमः ।
तं त्यजेत् सूचकं राजा गुरुदण्डेन दण्डयन् ॥ २५ ॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
कर्णमूले दशत्यन्यं हरत्यन्यस्य जीवनम् ॥ २६ ॥

परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
अमात्यं कार्य्यिणं वापि दासम्वा सन्त्यजेन्नृपः ॥२७॥
प्रत्यक्षे प्रखराभाषं परोक्षे कार्य्यतत्परम् ।
पालयेत् पृथिवीपालो जनमेवं न संत्यजेत् ॥ २८ ॥
प्रत्यक्षे प्रियसम्भाषः परोक्षे कार्य्यतत्परः ।
दुर्लभो मानवो ह्येवं सर्वसम्पद्विवर्द्धकः ॥ २९ ॥
ताड़ितोऽपि दुरुक्तोऽपि यः प्रभुं नावमन्यते ।
स्वदोषञ्चावलोकेत स वै भृत्योत्तमो मतः ॥ ३० ॥
यः प्रभुं देववत् पश्यन् यथार्थं साधयेत् कृतिम् ।
तद्द्रव्यंपालयन् यत्नात्तं विद्यात् पुत्रवन्नृपः ॥ ३१ ॥
नराः कुर्वन्ति कार्य्याणि प्रथमं भयसङ्कुलाः ।
पुरातनाः सुविश्वस्ता निर्भयाः स्युर्भयङ्कराः ॥३२॥
यः केवलं स्वयं भुङ्क्ते स ज्ञातुं सुलभो भवेत् ।
मिलित्वा यस्तु संहर्त्ता दुर्विज्ञेयः स तस्करः ॥ ३३ ॥
नयेन वर्त्तनं पुंसां वर्द्धनं सुखसम्पदाम् ।
नीतिज्ञाश्चतुरश्रेष्ठाः कस्तान् वारयितुं क्षमः ॥३४॥
न केचिदिह संसारे धर्म्मार्थी राजसेविनः ।
सर्व्वं एव सुखाशंसाकर्षिता दास्ययोजिताः ॥३५॥
सर्व्वथा रक्षणं तस्माद् धनानां दुष्करं मतम् ।
अन्यान्यग्रहणाद्रक्षेद्राजामात्यादिसाधितात् ॥ ३६ ॥

सत्ये रतान् कार्य्यकरांस्तेजोगाम्भीर्य्यभूषितान् ।
सन्तोषयेद्धनैः प्रेम्णा कार्य्यार्थं पृथिवीपतिः ॥ ३७ ॥
एवं नियुक्ताः पुरुषा यस्य पश्यन्ति सम्पदम् ।
स जीवेद् दुष्टहस्तेभ्यो बहुधा कार्य्यिणाम्बलात्॥३८॥
अनुकूलानि मित्राणि भृत्या नित्यानुरागिणः ।
मन्त्रिणः कार्य्यतत्त्वज्ञाः सदा प्रभुहिते रताः ॥३९॥
परिपूर्णश्चिरं कोषो धनरत्नसमृद्धिभिः ।
प्रजाः स्वच्छन्दचारिण्यो नित्यतृप्ता निरामयाः ॥४०॥
नीरोगो बलवान् देहः प्रिया कान्ता गुणोन्नता ।
गुणिनां सन्निधिश्चैतन्महाभाग्यस्य लक्षणम् ॥ ४१ ॥

मण्डलनीतिः ।

देशान् विभज्य नृपतिर्यथावीर्य्यं यथोदयम् ।
साध्यक्षं स्थापयेद् यत्नान्मण्डलं हि पृथक् पृथक् ॥१॥
स्वप्रभावं यदा राजा मण्डलेषु परीक्षयेत् ।
तदा शनैर्निजामाज्ञां चालयेत् सुसमाहितः ॥ २ ॥
मण्डलेषु क्रमप्यूर्जमादाय मंत्रयन् नृपः ।
प्रोत्साहयन् दानमानैर्विद्यात् सर्व्वं तदाशयैः ॥३॥
एकमाज्ञापितं चेत्स्यात् सुसिद्धं निरुपद्रवम् ।
पुनराज्ञा विधातव्या क्रमादेवं सुमन्त्रणात् ॥ ४ ॥
एवं क्रमान्मण्डलानां यदि स्यात् शिरसीनतिः ।
तदा विद्यान्नरेशानः स्ववीर्य्यं छादकं नृणाम् ॥५॥

यदि केचिद् भवेन्नम्रा न परे सन्ति तादृशाः ।
नम्रानादाय नम्रेषु योजयेत् पृथिवीपतिः ॥ ६ ॥
तीक्ष्णमण्डलमध्येषु सुतीक्ष्णं पातयन् बलात् ।
तत्र संयोजयेदन्यं य आज्ञाधीनतां व्रजेत् ॥ ७ ॥
स्वबलैः पोषयंस्तस्य राज्यं विज्ञातमण्डलः ।
दुष्टं संत्रासयेद्राजा साम्राज्यस्थितिलिप्सया ॥ ८ ॥
तस्मिन्नुपद्रवं पश्येद् यदि राजा विचेतसाम् ।
पुनः प्रेम्णा वशीकुर्यात् शान्तवृत्तः शनैः शनैः ॥९॥
एवं क्रमेण नम्रेषु राजसु क्षितिनायकः ।
एकैकमुद्धतं यत्नात् पातयेत् क्रमशो नृपः ॥ १० ॥
हीनवीर्य्येषु राज्येतु मण्डलेषु नराधिपः ।
दासवच्चालयन्नाज्ञां सुखमिच्छेदकण्टकम् ॥ ११ ॥
न रक्ष्यः शिष्टवृत्तोऽपि मण्डलेषु महोज्ज्वलः ।
स क्रुद्धो जनयेद्भीतिं कालान्मण्डलसम्वृतः ॥ १२ ॥
सत्सूद्धतेषु भूपेषु मण्डलं न वशं चरेत् ।
अवज्ञातं चरेत्तेषामाश्रयं स्वजनैर्वृतम् ॥ १३ ॥
मण्डले सैन्यशस्त्रादि तावद्रक्षितुमादिशेत् ।
एकं द्वयं त्रयम्वापि मिलित्वा न हरेत् श्रियम् ॥१४॥
एकद्वित्र्यादिसंयोगः प्रायशः सुलभो नृणाम् ।
सर्व्वेषां मेलनं लोके बहुयत्नेन साध्यते ॥ १५ ॥

सर्व्वे यदि समुद्युक्ता नृपं हन्तुं समुद्यताः ।
किं कुर्य्यात् सैन्यशस्त्रादि श्रियं विद्याच्चचञ्चलाम्॥१६॥
तावत् शिक्षां मण्डलानां बलेषु विनियोजयेत् ।
नचातिवर्त्तते स्वीयं बलं बलविभूतिभिः ॥ १७ ॥
औन्नत्यादिविधानेन तथा कार्य्यं स्वमण्डलम् ।
परस्परजिगीषाद्यैर्येन दृष्टं परस्परम् ॥ १८ ॥
तथारोधो विधातव्यः परस्परसमीक्षणे ।
येनैक्यं भजतां तेषां क्रोधो न स्याद् भयावहः ॥१९॥
महाशस्त्रं महादुर्गं महारत्नं महापदम् ।
बलाद्वा कौशलात् प्रीत्या सर्व्वं ग्राह्यं स्वमण्डलात्॥२०॥
व्यापन्नानां मण्डलानां बालमादाय भूमिपः ।
पालयेत् शिक्षयेद्यत्नाद् येन स्यात् स सुनीतिमान्॥२१॥
स्वयत्नात् शिक्षितो ह्येष स्वजनैः स्वमतग्रहः ।
तिष्ठेत् स्वाज्ञाकरो नित्यं दासवन्मण्डलात्मजः ॥२२॥
चिरं तद्राज्यरक्षार्थं स्थापिता मानवा निजाः ।
तद्राज्यगतवृत्तान्तमवगच्छन्ति तत्त्वतः ॥ २३ ॥
मण्डलानां विलोकार्थं कार्य्याणां धरणीपतिः ।
संयोजयेज्जनं स्वीयं ससैन्यं कार्य्यतत्परम् ॥ २४ ॥
न चिरं स्थापयेत् कश्चिन्मण्डलानामवेक्षणे ।
मिलित्वा सोऽपि कालेन भयमुत्पादयेत् क्वचित्॥२५॥

मण्डलं वर्द्धयेद् दासैः शिष्टैः कार्य्यसुसाधकैः ।
प्रीत्या दानेन मानेन यदीच्छेत् शिवमात्मनः ॥ २६ ॥
अवेक्ष्य कार्य्यसम्पातं मण्डलं वर्द्धयेन्नृपः ।
येन कार्य्यं सुसिध्येत् स्वं न पुनर्व्वर्ज्जतुमर्हति ॥ २७ ॥
रक्षयेत्तै रणाङ्गानि स्वायत्तानि प्रयत्नतः ।
कार्य्यकाले फलं दद्युः क्रोधे नार्हन्ति पातने ॥ २८ ॥
मण्डलं पोषयन् राजा स्ववीर्य्यं न परित्यजेत् ।
सुप्तसिंहमुखे किं न निर्भयं मक्षिका विशेत् ॥ २९ ॥
न कार्य्यं मानवृद्ध्यादि केवलं विभवं विना ।
किं कुर्य्यान्मित्रभावेऽपि हीनदंष्ट्रनखो हरिः ॥ ३० ॥
कुलेन यशसा पुष्टा नावमान्याः कुलादिषु ।
तेषां नाशे किमिष्टं स्वमधिकः शत्रुतोदयः ॥ ३१ ॥
तस्माद् यथायथामाना यथाधर्म्मा यथोदयाः ।
रक्षितव्याः प्रयत्नेन येन यः सुखमर्हति ॥ ३२ ॥
वशीभावेऽपि नैकत्र मण्डलं मेलयेन्नृपः ।
परोक्षादपरोक्षेण व्यवहारो भयङ्करः ॥ ३३ ॥
परोक्षे मेलनं चारैर्बहुयत्नेन साध्यते ।
क्व विश्वासो नरेन्द्राणां हीनेषु हितवादिषु ॥ ३४ ॥
मण्डलं प्रीणयेन्नित्यं तेजसाच्छादयेत् सदा ।
स्वाधिकारप्रदानेन निजाज्ञावशवर्त्तिना ॥ ३५ ॥

भीषयेत् सैनिकैर्मध्ये स्थापितैस्तीक्ष्णपातनैः ।
नित्यं रणविधिप्रज्ञैर्नित्यं शिक्षाहवोत्सुकैः ॥ ३६ ॥
तीक्ष्णदण्डान्वितैर्नित्यं नित्यं प्रणयरञ्जितैः ।
समानैर्ज्जातितो धर्म्मैर्देशव्यवसितादिभिः ॥ ३७ ॥
क्रमान्मुख्यैरिदं ज्ञात्वा सैनिकं योजयेन्नृपः ।
सर्वधर्म्माविरोधेन यः स्यात् पालनतत्परः ॥ ३८ ॥
सैन्यशिक्षासमातुष्टो गच्छन्नैव कृतार्थताम् ।
स्वयं नित्यं प्रकुर्व्वीत शिक्षां निस्तन्द्रनिर्भयः ॥ ३९ ॥
स्वयश्चेत् सम्मुखासीनः कुर्य्यात् कार्यं स्वसैनिके ।
वर्द्धन्तेऽतीववीर्य्याणि प्रभुवीर्य्यसमाश्रयात् ॥ ४० ॥
सहसाऽऽक्रमणे शक्तो न भवेद् दुष्टमानसः ।
व्यसनं न नवालस्यं जायते वीर्य्यशालिनाम् ॥४१॥
सर्वदा चालयेत् सैन्यं न चिरं स्थापयेत् क्वचित् ।
चालनाद्वर्द्धते वीर्य्यं स्थापनाद्धीनवीर्य्यता ॥ ४२ ॥
नियमाच्चालितं सैन्यं शत्रुहृन्मर्द्दकं भवेत् ।
शतं करोति कार्य्याणि लक्षाणामपि दुष्करम् ॥४३॥
महामण्डलमध्ये च स्वराज्ये वान्यराज्यके ।
नदीपर्वतसिन्धूनां नगरं स्थापयेत् तटे ॥ ४४ ॥
बलाद् दानात् सख्यतो वा स्वजनं स्थापयंस्ततः ।
नानोपायैर्विजानीयाल्लोकानां वृत्तिवैभवम् ॥ ४५ ॥

वाणिज्यं वर्द्धते तस्माद् बुद्धिवीर्य्यप्रदं नृणाम् ।
वाणिज्याद्वर्द्धते लक्ष्मीर्दुष्क्रिया च विनश्यति ॥ ४६ ॥
मम प्रीतिकराः सर्वे मम सन्तानवत् प्रियाः ।
स्थाप्या मयैव दुःखेषु मयैवार्च्याः सुखोदये ॥ ४७ ॥
अपेक्षमाणा मद्वक्त्रं हानौ लाभे च नित्यशः ।
एवं विद्वान् नरेशानो जात्यादीन्न विचालयेत् ॥४८॥
दुर्लभो मन्त्रकोह्येवं प्रायो लोका वहिर्म्मुखाः ।
अनासक्ता महात्मान एको राजा किमाचरेत् ॥४९॥
मन्त्रिणो देवलोके च गान्धर्वे कैन्नरे तथा ।
ऋषयो मुनयः पूज्या लोकतत्त्वार्थकोविदाः ॥ ५० ॥
ये लोका नित्यनिर्भीका नित्यतृप्तिपरायणाः ।
मण्डामण्डनभावेन प्रसन्ना नित्यसौहृदाः ॥ ५१ ॥
इन्द्रानिलयमादित्वं भुञ्जते निरुपद्रवम् ।
दुराक्रम्या महादुर्गैर्हिमगिर्य्यादिकल्पितैः ॥ ५२ ॥
यो मण्डलमहाप्रीत्या प्रजारञ्जनतत्परः ।
निष्कण्टकं महाराज्यं स भुनक्ति नराधिपः ॥ ५३ ॥
यो मण्डलं हीनबलं सर्वथा कुरुते नृपः ।
सोऽचिरेणैव कालेन भ्रष्टराज्यो विनश्यति ॥ ५४ ॥
चेन्मण्डलं हीनबलं भुजङ्ग इव निर्विषः ।
विपत्तौ कः सहायः स्यादेको राजा किमाचरेत्॥५५॥

यन्मण्डलं निजाचारादनासक्तं विरोधकृत् ।
यत्नेन शमयेद्राजा शिक्षया वापि यत्नतः ॥ ५६ ॥
मेलयन् मण्डलं मानैः सादरैर्विनयाक्षरैः ।
आचार्य्यवत् प्रियं शिष्यं सशिक्षां मित्रतां नयेत् ॥ ५७ ॥
सर्वत्रास्ति परा मैत्री किन्तु साध्या प्रयत्नतः ।
सर्वे यदि निरापन्नाः क्व विरोधः सुखात्मनाम् ॥ ५८ ॥
क्रूरता शठता स्वार्थजीविता मूढ़ता तथा ।
केवलं विषयासक्तिः कथं कुर्य्याद् वशे जनम् ॥ ५९ ॥
न नरः केवलं राजा लोकविष्णुः सनातनः ।
स कथं भ्रष्टराज्यः स्यात् स्वांशे जीवति सर्वतः ॥ ६० ॥
ये तामसीमुपादाय प्रकृतिं भोगतत्पराः ।
कथन्ते पृथिवीशत्वं भजन्ते स्वल्पसाधनाः ॥ ६१ ॥
यथापुण्यं तथाभुक्त्वा तमः प्रच्छन्नमानसाः ।
निपतन्ति महाघोरे पुनः सन्तापसागरे ॥ ६२ ॥
सुखसञ्चारयोग्यासु मण्डलान्तरभूमिषु ।
संस्थापयेन्नृपो यत्नात् स्वसैन्यं वीर्य्यसङ्कुलम् ॥ ६३ ॥
न कार्य्यो मण्डलोच्छेदः कदाचिदपि भूभृता ।
हीनवीर्य्यं विधायैतत् पालयेत् पृथिवीपतिः ॥ ६४ ॥
मण्डलस्य परिच्छेदे यावत् संरक्षणं नयात् ।
नैकसाध्यं भवेत् कश्चित् कृत्वा यत्नशतान्यपि ॥ ६५ ॥

एकस्य शासने चेत् स्यात् सर्वेषामिह शासनम् ।
कः शासनं समस्तानां कामयेत महीपतिः ॥ ६६ ॥
सामन्तहीनं राज्यञ्चेत् केवलं प्रजया हतम् ।
साम्राज्यलक्ष्मीः कस्याग्रे भूषिता परिशोभते ॥ ६७ ॥
सामन्तानामभिच्छेदे निर्भयः पृथिवीपतिः ।
भोगं कामयते नित्यं यो भोगः सर्वनाशकृत् ॥ ६८ ॥
प्रयोजनं न सैन्यानामालस्यं तिष्ठतामपि ।
अन्याक्रमणमात्रेण हतराज्यो भवेन्नृपः ॥ ६९ ॥

मण्डलविभागः ।

द्विविधा माण्डली नीतिः स्वराज्यपरिरक्षणे ।
एका नित्यानवाङ्गीयं द्वितीया स्थिररूपिणी ॥ १ ॥
यदायदाधिपत्यं स्यात् तदाकारप्रवर्त्तिनी ।
वाह्येन व्यवहारेण नवांगीयं विकाशते ॥ २ ॥
एषा सम्भोगसन्तृप्ता वश्यं कृत्वा नराधिपम् ।
शोकमोहमयैर्नित्यं सभयं साधयेत् क्रियाम् ॥ ३ ॥
अपूर्वपरविज्ञानसन्धानपरिवर्ज्जितः ।
तात्कालिकाभोगरक्तो वञ्चितो विधिना नृपः ॥ ४ ॥
राज्यमेतन्नरेन्द्राणां बहूनां भाग्यवैभवैः ।
तदेको योऽस्य संहर्त्ता स पापात्मा कुलाधमः ॥ ५ ॥
द्वितीया चिरसंस्थानवेशभूषणरञ्जिता ।
दीनैवगूढ़संमत्ता चिरानन्दमयी शुभा ॥ ६ ॥

एषापि द्विविधा ज्ञेया वीर्य्यसत्ताभियोगतः ।
यथादेशं यथापात्रं यथावीर्य्यं यथाकुलम् ॥ ७ ॥
राजसत्वेन वीर्य्यस्य कदाचिद् यदि वा भयम् ।
सत्वान्नैर्म्मल्यविज्ञानैर्द्वितीया चिरजीविनी ॥ ८ ॥
राजसेनैव भावेन कदाचिदपि सिध्यति ।
साम्राज्यं किन्तुनैवैराद्राज्यमेतन्महापदम् ॥ ९ ॥
साम्राज्ये सततं भीतिर्नाचभीतेः क्षणोदयः ।
उचिताचाररक्तस्य को बलाद्धन्तुमिच्छति ॥ १० ॥
महासत्वोद्भवो यस्मिन् काले लोकस्य भाग्यतः ।
साम्राज्येऽपि तदा सत्वमन्यथा तीक्ष्णता सदा ॥ ११ ॥
नानारूपोच जगति सदास्वार्थपरायणे ।
सहसा को भवेद्देवो यदाज्ञावशताञ्चरेत् ॥ १२ ॥
साम्राज्यादपि संसिद्धिर्जायते मण्डलास्पदे ।
साम्राज्यं कालतो नश्येन्मण्डलं सहसा न तु ॥ १३ ॥

महासत्त्वव्यवहारः ।

कार्य्यिभिः साधयेत् कार्य्यं सर्व्वदा स्वार्थलोकनैः ।
निर्व्विरोधैः सदा धर्म्मैरवीर्य्यैतैक्ष्णसमाकुलैः ॥ १ ॥
आपत्सु विनयैर्दानैः शाठ्ये भक्त्या दयादरैः ।
मार्ज्जार इव प्रच्छन्ननखः स्पर्शप्रियः सदा ॥ २ ॥
स्पष्टतो न प्रसादं स्वं वहुधा न कदा वदेत् ।
गूढभङ्ग्याचरेत् कार्य्यं येनात्मा नावकृष्यते ॥ ३ ॥

यो वेत्तीङ्गितलेशेन बुद्ध्वा भावं प्रसन्नधीः ।
न्यायचारी क्रियादक्षः एष मित्रं शनैः शनैः ॥ ४ ॥
ये तेन मोहसम्पन्नाः स्वार्थसाधनकामुकाः ।
ते मूढ़ा दासवत् पाल्या भयोत्साहादिभीषणैः ॥५॥

मण्डलप्रीतिः ।

यथाधिकारो यस्यास्ति तस्य तं सर्व्वदर्शने ।
निर्व्वाधं शाठ्यनिर्म्मोकात् योजयेत् पृथिवीपतिः॥१॥
सुशासनैर्धनैर्मानै राज्यैः सम्वर्द्धयेत् प्रभुः ।
अशासने तदीयानां मतं नीत्वा विभीषयेत् ॥ २ ॥
कर्त्तव्ये कार्य्यमात्रे च मण्डलैः सह मन्त्रयेत् ।
नो वञ्चयेद् भीषयेद्वा प्रीणयेत् प्रियमित्रवत् ॥ ३ ॥
सद्बुद्ध्या योजयेन्नित्यं व्यसनादुद्धरेत् सदा ।
कुर्य्यात्त्राणं विपत्पाते सम्पत्तौ प्रीतिमाचरेत् ॥ ४ ॥
एवं कृत्वा महीशानो मण्डले कुशलां धियम् ।
इन्द्रत्वं लभते लोके निरावाधं सदोदयम् ॥ ५ ॥

लोकपीड़ादोषः ।

प्रजा मज्जन्तु दुःखेषु निराहारा निराश्रयाः ।
राजकोषोऽस्तु सम्पूर्णो रत्नैः शस्यैर्धनैः सदा ॥ १ ॥
यस्यैवं दुर्म्मते राज्ञः स्वार्थभ्रान्तिरता मतिः ।
सोऽचिराद्राज्यविभ्रष्टो महादुःखे निषीदति ॥ २ ॥

सर्व्वेषां रञ्जको भूयाद् यदि राजा सुमार्गगः ।
यथा तथास्तु यत् किञ्चित तत् सर्व्वं धरणीभृतः॥३॥
लोकक्लेशेन चेत् पूर्णः कोषो नासौ फलप्रदः ।
न धनं राज्यरक्षार्थं लोका राज्यस्य रक्षकाः ॥ ४ ॥
सर्व्वेषां प्रभुताबुद्धिः सर्व्वभोगस्य भोगिता ।
एतद्राज्यफलं राज्ञां न शाठ्यं न धनार्ज्जनम् ॥ ५ ॥

राज्यरक्षोपायः ।

नदीपर्व्वतकान्तारमर्व्वादिषु विचक्षणः ।
मार्गं संसाधयेदेवं येन सैन्यं सुखञ्चरेत् ॥ १ ॥
न रक्ष्यं तादृशं स्थानं यत्र यानं सुदुष्करम् ।
यत्तिष्ठेद् दुर्गमं स्थानं तदेव भयदं क्वचित् ॥ २ ॥
अन्यसाम्राज्यलोकानां न दातव्यं पदं क्वचित् ।
यदि दद्यात् तदा रक्षेद् विषयं सुसमाहितः ॥ ३ ॥
वाणिज्यार्थं विलोकार्थमन्यार्थम्वा य आगताः ।
तेषां द्रव्याणि कार्य्याणि गूढ़चारैः परीक्षयेत् ॥ ४ ॥
परीक्ष्य स्वजनैर्व्याप्य तेषां कार्यं समाप्य च ।
निष्काशयेत् स्वराज्येभ्यो राजग्राह्यं समाददत्॥ ५ ॥
दुश्चेष्टितं विलोक्येत यदि तेषां लवादपि ।
सर्वस्वमाददद् वीर्य्याद् गुरुदण्डेन दण्डयेत् ॥ ६ ॥
राजवृत्तिः प्रजावृत्तिर्वृत्तिः सांग्रामिकस्य च ।
गुह्यस्थानं तथा शस्त्रं गोपनीयं प्रयत्नतः ॥ ७ ॥

नानावृत्तिधराः क्रूरा विषयच्छिद्रदर्शिनः ।
भ्रमन्ति सततं राज्ये तत्त्वान्वेषणतत्पराः ॥ ८ ॥
विशृङ्खलस्य राज्यस्य यदि तत्त्वं न गृह्यते ।
नाक्रमन्ति महान्तोऽपि हीनवीर्य्यं नराधिपम् ॥ ९ ॥
सर्वे सर्व्वाङ्गसम्पन्नाः सर्वे विषयभोगिनः ।
वृत्तिरेव मनुष्याणां वर्द्धका नाशका श्रियः ॥ १० ॥
वृत्त्या सञ्जायते वीर्य्यं वृत्त्याऽऽलस्यं प्रजायते ।
गोपनीया प्रयत्नेन तस्माद् वृत्तिर्महीभृता ॥ ११ ॥
आरण्याः पार्वता वापि ये क्रूराः खरवृत्तयः ।
सर्वदैव शङ्कनीयास्ते कालाद्राज्यहारकाः ॥ १२ ॥
सिंहव्याघ्रादिहिंस्रेण येषां वृत्तिर्निरन्तरा ।
ज्ञातव्या कठिना वृत्तिस्तेषामेव रणाङ्गने ॥ १३ ॥
ये भोगिनः शान्तवृत्ताः कार्य्याकार्य्यविवेचकाः ।
तेभ्यः कदाचिन्न भयं राज्ञः संग्रामभूमिषु ॥ १४ ॥
यावद्विवर्द्धते विद्या हिताहितविबोधिका ।
तावद् विज्ञायतां धीरै राजलक्ष्मीश्चञ्चला ॥ १५ ॥
यावन्मूढा दस्युवृत्ता वर्द्धन्ते निर्भया नराः ।
तावद् विज्ञायतां लक्ष्मीश्चञ्चलेयं नृपालये ॥ १६ ॥
महादस्युर्मतो राजा यो वीर इति गीयते ।
अन्यथा किं प्राणनाशाद्राज्यहारी श्रियं हरेत् ॥१७॥

यावत् कठोरवृत्तिः स्याद्राजा तीक्ष्णानलोपमः ।
वीरप्रियेयं धरणी तावत्तस्य वशं चरेत् ॥ १८ ॥
भार्य्या वा तनयो वापि गुरुर्वा मित्रमेव वा ।
राजविद्रोहिणो बध्या नैव कार्य्या विचारणा ॥ १९ ॥
सर्वेषां प्राणसंहारात् सर्व्वाकीर्त्तेः प्रसाधनात् ।
सर्वपापसमायोगाद् राज्यं ग्राह्यं महीभृता ॥ २० ॥
सम्प्राप्ते पृथिवीशत्वे क्वायशः क्वापि कल्मषम् ।
लब्ध्वा राज्यं विधातव्यो विचारी लोकरञ्जनः ॥ २१ ॥
मेलने दुष्टवृत्तीनां शिष्टैर्व्याघातमाचरेत् ।
बुद्धिसम्प्रेरिते वीर्य्ये जायते सुमहद् भयम् ॥ २२ ॥
सीमायां दृष्टिरत्युग्रा विधातव्या प्रतिक्षणम् ।
जले वा पर्वते वापि कान्तारे वा मरौ तथा ॥ २३ ॥
शृणुयान्न वचः कस्य प्रलोभनपरं क्वचित् ।
कार्य्यमात्रेषु भूमीशो दोषमग्रे विचारयेत् ॥ २४ ॥
विचारे सर्वथा पश्येत् प्रमाणानि विचक्षणः ।
विचार्य्य दण्डयेद् योग्यं न भीतो न कृपापरः ॥ २५ ॥
विचारेषु तटस्थः सन् निर्णीयोक्तदिशा नृपः ।
उचितं दण्डयेद् दण्ड्यान् न कुर्य्यात्ते यथा तथा ॥ २६ ॥
आज्ञामुल्लंघयेद् यस्तु स्वल्पम्वा बहुलां च वा ।
तीक्ष्णदण्डेन संदण्ड्यः स न चात्र विचारणा ॥ २७ ॥

दण्डः शास्ति प्रजाः सर्व्वा दण्ड एवाभिरक्षति ।
दण्डो जागर्त्ति सुप्तेषु दण्डं धर्म्मं विदुर्बुधाः ॥ २८ ॥
अपराधिवचः साक्षिवचः श्रुत्वापराधिनः ।
विश्रुतिञ्चावगम्य स्वां मतिं दिव्यां समाश्रयेत् ॥२९॥
शिरसः पातनं हन्तुश्चौरहस्तविकर्त्तनम् ।
एवं यथा यथा पश्येत्तथा कुर्य्यादनातुरः ॥ ३० ॥
लोकानां कार्य्यदृष्ट्यर्थं सर्व्वेषामनुमोदनात् ।
विचारकान् ग्राममुख्यैर्जातिमुख्यैर्विचारयेत् ॥ ३१ ॥
सम्पत्तौ वा विपत्तौ वा कर्त्तव्यविधिनिश्चये ।
मण्डलैर्देशमुख्यैश्च विचार्य्य कृतिमर्ज्जयेत् ॥ ३२ ॥
सर्व्वेषां सम्मते कार्य्ये न कश्चिद् द्वेषमर्हति ।
अकार्य्यमपि नो क्लेशं जनयेत् सर्व्वसम्मतम् ॥ ३३ ॥
विड्वाह्निनं समारभ्य यावदुन्नतमण्डलम् ।
सर्व्वेषामधिदेवोऽस्ति सर्व्वे यन्मतगामिनः ॥ ३४ ॥
ते सर्व्वे यदि कार्य्येषु सहायाः स्युर्महीभृताम् ।
सर्व्वेषां लोकसङ्घानां रञ्जनं सुलभं भवेत् ॥ ३५ ॥
यासु जातिषु यत्कार्य्यं तासां मुख्यैस्तदाचरन् ।
नाकीर्त्तिं भजते भूभृद्विचारसमुद्भवाम् ॥ ३६ ॥
न कश्चित् सर्व्वजातिस्थकृत्याकृत्यमतौ क्षमः ।
अज्ञानात् साधितं कार्य्यं न कदाचित् सुसिध्यति॥ ३७॥

दुर्लक्षणानि ।

भुक्तभोगं हीनवीर्य्यमलसं वार्द्धुषे पतिम् ।
त्यक्त्वा नवं कामयते पृथ्वीयं स्थिरयौवना ॥ १ ॥
येन कृत्वा शिरश्छेदं तपसाराधितो हरिः ।
वीरः स साहसी वीर्य्याल्लभते पृथिवीमिमाम् ॥ २ ॥
चपला चञ्चला यत्र तत्र नित्यं विलोक्यते ।
राजाऽलसो भोगसक्तो व्यसनी दुष्टसम्वृतः ॥ ३ ॥
दुष्टाः प्रोत्साहदानेन वर्द्धयन्ते दुराशयम् ।
धनं हरन्ति कार्य्यस्था निर्भयाः कार्य्यतत्पराः ॥ ४ ॥
राज्यं विचारहीनं स्यात् सर्व्वे स्युः प्रभवो जनाः ।
शाठ्यं चौर्य्यं बलात्कारो दुर्व्वृत्तं वर्द्धतेऽनिशम् ॥ ५ ॥
सभायां दर्शको नास्ति राजा दुष्टैरलङ्कृतः ।
प्रजा उत्कण्ठिताः सर्व्वा राजविद्वेषणे रताः ॥ ६ ॥
नार्प्यते राजसंग्राह्यो भागो नाप्यभिमन्यते ।
व्यसने स्थायिनाशेन न्याय्यानामग्रहेण च ॥ ७ ॥
शून्यकोषान्न दीयन्ते समये वेतनादयः ।
सद्वृत्तयो जनाः सर्व्वे त्यजन्ति नृपमुद्धतम् ॥ ८ ॥
दुर्व्वृत्तास्ते प्रवर्त्तन्ते राजग्राह्यं हरन्ति ये ।
यानासनच्छत्रदण्डरतं यत् तत्र वर्त्तते ॥ ९ ॥
सज्जना नाभिगच्छन्ति दुष्टा हि भयसङ्कुलाः ।
न वदन्ति हितं किञ्चिद् ये दुष्टा ग्रासकारिणः॥१०॥

स्त्रियो भवन्ति प्रबला विद्वेषिण्यः स्वभावतः ।
हरन्ति स्वामिनः प्राणान् प्रायशो दुष्टसाधनैः ॥११॥
जीवेद् यदि करात्तासां हतवीर्य्यो हतप्रभः ।
निर्बान्धवः सैन्यहीनो निर्धनो निर्णयी नृपः ॥ १२ ॥
उच्छृङ्खला जनाः सर्व्वे दुष्टैर्दुष्टतमा भृशम् ।
कामयन्तेऽन्यभूपालं कृत्वा साहाय्यमुत्तमम् ॥ १३ ॥
अन्यैर्वा स्वसामरिकैर्बलादाक्रम्यते यदा ।
तदैवोत्पाट्यते राजा वात्ययेव तृणं यथा ॥ १४ ॥
यत्रैव राज्यनाशोऽभूद् भावी वा धरणीभृताम् ।
तत्र राजा भोगसक्तो विषयानीक्षकः सदा ॥ १५ ॥
एवं चिन्हं विलोक्येत यस्य राज्ये समुद्गतम् ।
स राजा संत्वरं नश्येन्नीतिज्ञैरनुमीयताम् ॥ १६ ॥
सन्मन्त्रिभिर्नयपरः कार्य्याकार्य्यविलोककः ।
यदि स्याद् भूपतिर्नित्यं कस्तद्राज्यं हरेत् पुनः ॥१७॥

राजमौर्ख्यकर्त्तव्यानि ।

जडश्चेद् भूपतिर्भूत्वा न न्यायाद्रक्षितुं क्षमः ।
स्वकार्य्यं धीरवत्स्वेषु न्यसेद्राज्यस्य रक्षणे ॥ १ ॥
स्वाज्ञानदर्शनं पुंसां न जायेत कथञ्चन ।
साहङ्कारा जनाः सर्व्वे स्वस्वामिज्ञानसम्पदि ॥ २ ॥
विशेषतो नरेशानो मदोन्मत्तो विभूतिभिः ।
निकृष्टं स्वं विजानीयात् कथं स्वजनसंसदि ॥ ३ ॥

सदा तोषकरैर्युक्तो नित्यं भिक्षुभिरर्च्चितः ।
न दासस्सूचितं वक्तुं समर्थः स्यात् कथञ्चन ॥ ४ ॥
यथा बिभेति मूढाद्धि न तथा ज्ञानिनो जनः ।
मूढो मदोद्धतो नित्यं ज्ञानी न्यायान्न रोषभाक् ॥५॥
अन्वेषेत् कथितात्मा स्याद् विश्वासं न भजेत् क्वचित् ।
परं क्रोधपरो भूत्वा दण्डयेद् दोषवादिनः ॥ ६ ॥
तस्माद्यथाऽन्यकार्य्यार्थं जनान् संयोजयेन्नृपः ।
तथा ह्यात्मविबोधार्थं धीरान् रक्षेत् सभाजनम् ॥७॥
यः पूज्यते जनै रामः पूर्णब्रह्मस्वरूपतः ।
सोऽपि राजपदासक्तो जनैर्दोषं व्यलोकयत् ॥ ८ ॥
तस्मात् स्वदोषं विज्ञाय शमयेत् पृथिवीपतिः ।
अन्यथा धीरवृन्देषु राजकार्य्यं विनिक्षिपेत् ॥ ९ ॥
न क्षिपेद्यदि वा कार्य्यं मदोन्मत्तो विमार्गगः ।
सर्व्वे मिलित्वा तं दुष्टं पातयेयुर्नृपासनात् ॥ १० ॥
लोकानां रक्षणार्थाय राजा सृष्टोऽभिरक्षिता ।
स चेत्तस्मिन्ननासक्तः कथं राजेति गीयते ॥ ११ ॥
ऋषिभिः पातितः पूर्व्वं वेणनामा दुरात्मवान् ।
यः पूर्व्वं मोहसम्पन्नो लोकानां तापकोऽभवत् ॥१२॥
पुनः स्वाम्ये महातेजास्तत्संसर्ग्यथवा परः ।
योजनीयः प्रयत्नेन प्रजाभिः क्षेमसिद्धये ॥ १३ ॥

यत्रैवं सुस्थितिः पुंसां तत्र राज्यं न नश्यति ।
न्यायमार्गो जनान् सर्व्वान् वशे कुर्य्याद्बलादिह॥१४॥
राजवंशे भवेद्राजा मूढ़ो वा दुष्क्रियारतः।
यत्रैवं संस्कृतिः पुंसां तत्र राज्यं विनश्यति ॥ १५ ॥
दुष्टो दुष्टैः समासक्तः शिष्टाः सन्तापतापिताः ।
विपत्तौ दुर्लभस्त्राता लोका दुर्नयदुःखिताः॥ १६ ॥

गुणरक्षादि ।

नृत्यं गीतं तथा वाद्यं काव्यं शिल्पं वणिक्क्रियाम् ।
वाचालत्वं भण्डवृत्तिं व्यवहारैन्द्रजालिके ॥ १ ॥
मल्लयुद्धं धनुर्विद्यां वक्तृतां कारुनैपुणम् ।
यत् किञ्चिदपि जानन्ति ये भवे नैपुणोत्थितम् ॥ २ ॥
स्वनैपुण्यवशं कर्त्तुं ते सर्व्वे पृथिवीपतिम् ।
कामयन्ते सदा स्वेच्छाहानौ विद्वेषमागताः ॥ ३ ॥
क्रूरोऽयं कृपणो दुष्टो ह्यगुणज्ञो मदालसः ।
एवं नानाभिलापेन दूषयन्ति महीपतिम् ॥ ४ ॥
तस्माद् यत्र महीपालो यत्र वीक्षेत गौरवम् ।
तं तथा पालयेत् प्रीत्या सर्व्वभोगकरो हि सः॥ ५ ॥
यतो यतोऽभिरक्षेत कुलतो देशतोऽपि वा ।
ततः स परिरक्षेत गुणवान्न विचारयेत् ॥ ६ ॥
दूषणादिह निर्याति पालनाद्वर्द्धते गुणः ।
राजैव गुणदोषाणां पालको नाशकस्तथा ॥ ७ ॥

गुणो यत्र मतिस्तत्र मतिर्यत्र धनं ततः ।
धनं यत्र सुखं तत्र तस्मात् पाल्यः सदा गुणः ॥ ८ ॥
न्यायानुरोधि तत्तेजः सहनीयं महीभृता ।
गुणवानपि सन्त्याज्यो यदि न्यायान्न वर्त्तते ॥ ९ ॥
असन्तोषी रूक्षभाषी चपलः सूचकस्तथा ।
प्रभुशक्तिविनाशी च गुणवानपि हीयताम् ॥ १० ॥
वाणिज्यकृषिसंग्रामशिल्पकार्य्यव्रतादिषु ।
बुद्ध्युत्साहकुलं दृष्ट्वा योजयेत् पृथिवीपतिः ॥ ११ ॥
निर्भयाध्यवसायस्थं वाणिज्ये विनियोजयेत् ।
मूढ़ं क्लेशसहं तद्वत् कृषिकर्म्मणि योजयेत् ॥ १२ ॥
शूरं साहसिकं तीक्ष्णं संग्रामे परिचोदयेत् ।
दुर्व्वलं स्थिरदृष्टिञ्च शिल्पे सम्पालयेन्नृपः ॥ १३ ॥
बुद्धिमन्तं शठं कौलं व्यवहारे नियोजयेत् ।
भोगे व्यसनिनं रक्षेद् ये तत्तत्त्वविलोककाः ॥ १४ ॥
धार्म्मिकं कुलजं धीरं वृद्धं सर्व्वप्रियं नृपः ।
महाधिकारे संरक्षेद् यः सर्व्वं परिपालयेत् ॥ १५ ॥
स्वधर्म्मे परधर्म्मे वा धर्म्मनिष्ठः प्रशस्यते ।
न हि धर्म्मरतात् कश्चिद् भवन्ति परमापदः ॥ १६ ॥
येषाम्मतेऽन्यधर्म्मेषु निरतानां विनाशनात् ।
धर्म्मः सञ्जायते तेषां नाशनम्वापि ताड़नम् ॥ १७ ॥

सा बुद्धिरथवा नाश्या बलकौशलयुक्तिभिः ।
अथवातिप्रीतियोगैर्निःशाप्यं पालयेद्विताम् ॥ १८ ॥
सर्व्वेषामेकधर्म्मित्वसाधनं दुष्करं नृणां ।
देशकालस्वभावादिभेदाद्धर्म्मः शुभावहः ॥ १९ ॥
विद्वेषेण विना सृष्टिर्न तिष्ठति कदाचन ।
तस्माद्विचित्रता वृत्तेर्ज्ञेया स्वाभाविकी बुधैः ॥२०॥
यदि सर्व्वं गुणैर्युक्तो नास्तिको न महीभृता ।
विश्वास्यः प्रवले कार्य्ये नाकार्य्यं तस्य विद्यते ॥२१॥
समयं प्राप्य दुष्टात्मा स्वार्थसाधनकारणम् ।
कर्त्तुमर्होऽखिलं कर्म्म न भयं तस्य विद्यते ॥ २२ ॥
यावद्दण्डभयं तस्य तावत् तिष्ठद्वशे स तु ।
तस्य नाशे प्रभोः प्राणान् हन्तुं स्वच्छन्दतः प्रभुः २३॥
स्वार्थसक्ता जनाः सर्व्वे यदि सुधार्म्मिकाःपुनः ।
सर्वथा स्वामिनिर्घाते भीताः स्युः परलोकतः ॥ २४ ॥
तस्करो धार्मिको ग्राह्यः सत्यवादी न नास्तिकः ।
यन्तर्भीतो भवेद्धर्म्मादधर्म्मान्निर्भयान्तरः ॥ २५ ॥
पालयेन्न तथा कश्चिद् भृत्यामात्येषु भूमिपः ।
यस्मिन् सम्पालिते लोकः श्रद्धाहीनः प्रजायते ॥२६॥
स्वविचारे गुणान् दोषान् द्रष्टुं धीरान्नियोजयेत् ।
सत्योक्तावभयं दत्वा शृणुयात् कार्य्यमात्मनः ॥ २७ ॥

तथादिशेत् प्रजासङ्घं गुणदोषनिरीक्षणे ।
वञ्चनीयो न वा स्वामी यथा तैस्तत्त्ववेदने ॥ २८ ॥
प्रायशो मानवाः सर्व्वे भयाल्लोभान्महीपतिम् ।
श्रावयन्ति हितां वार्त्तां गोपयन्ति च दूषणम् ॥ २९॥
स्वराज्ये सन्ति यावन्ति सत्कर्म्माणि महीभृता ।
पालनीयानि यत्नेन मानदानादिसम्पदा ॥ ३० ॥
अन्यत्र यदि लभ्येत गुणः सम्पद्विवर्द्धनः ।
आदेयः सादरं राज्ञा कृत्वा यत्नशतान्यपि ॥ ३१ ॥
विशेषतः सामरिकं कौशलं यत्र दृश्यते ।
तदादेयं प्रयत्नेन राज्यानां जीवनं हि तत् ॥ ३२ ॥
नियोजयेज्जनान् नित्यं समरद्रव्यसाधने ।
स्वल्पे लाभे महादानमत्रैव शुभदम्मतम् ॥ ३३ ॥
नित्यं सुशिक्षयेद्राजा सैन्यं स्वस्वक्रियासु च ।
प्राणाधिकं विलोकेत तोषयेदर्पणादिना ॥ ३४ ॥
शिक्षणीयाः प्रजाः सर्व्वा नियमाद्रणकौशलम् ।
येन कार्य्याभिपतिताः सर्व्वाः स्युः समरात्मकाः ॥३५॥
धनुः खड्गाग्निशस्त्राणि कुन्ताः परशुपट्टिशाः ।
अभिरक्ष्याणि सर्व्वाणि शिक्षणीयानि यत्नतः ॥ ३६॥
विलोक्य बलबुद्ध्यादि शिक्षयंस्तानि मानवान् ।
विभज्य सैनिकान् कुर्य्याच्चतुरान् सर्वशस्त्रिणः ॥३७॥

दूरे शस्त्राग्निवाणादेः समरः सन्निधौ पुनः ।
खड्गादेश्चालनं विद्याद् विजयाय महीभृताम् ॥३८॥
दोषेऽपि सहसा सैन्यप्राणान् हन्यान्न भूमिपः ।
दण्डयेत्तीक्ष्णकार्य्येण यथावीर्य्यं प्रवर्द्धते ॥ ३९ ॥
एवं महत्तरं हन्यात् सहसा न महीपतिः ।
महान् हि प्रायशो बुद्ध्या न दोषेषु निमज्जति ॥४०॥
यस्य नाशे महानिष्टं स न नाश्यः कथञ्चन ।
तिरस्कार्य्यो दण्डनीयो यथाऽसौ न प्रवर्त्तते ॥ ४१ ॥
सदा क्लेशसहं कुर्य्यात् स्वसैन्यं वसुधाधिपः ।
गिरिदुर्गमरुक्षेत्रे साधयेत् सततं क्रियाम् ॥ ४२ ॥
एवमश्वगजादीनि कठोरैः कर्म्मभिः सदा ।
श्रान्तिदक्षाणि कार्य्याणि निर्भयानि तथा नृपैः॥४३॥
सांग्रामिकवैषयिकलोकानां कार्य्यवीक्षणे ।
पृथक् पृथग् विधातव्या सभा दण्डादिसाधिका ॥४४॥
नास्त्युपेक्षा विषयिणां दोषेष्वल्पतरेष्वपि ।
न दोषेपूचितो दण्डः सैन्यानां तत्समो भवेत् ॥४५॥

प्रजारक्षणम् ।

प्रजाः प्राणसमाः पश्येत् पक्षपातच्युतो नृपः ।
नोत्पीड़येत् करग्राहैर्नावमानैर्विशोषयेत् ॥ १ ॥
प्रजाश्रेष्ठं समादाय राजा तत्त्वं विचारयेत् ।
समयं पालयेत्तासां नहि धर्म्माद् विचालयेत् ॥ २ ॥

विवादे न्यायरक्षार्थं प्रजाश्रेष्ठान् निवेशयेत् ।
ये यथाकार्य्यनिपुणा स्तैस्तत् कार्य्यं प्रसाधयेत् ॥ ३ ॥
ये यथा सद्‌गुणोपेता स्तांस्तथैव प्रपालयेत् ।
पुण्यं प्रजाकृतं यत् स्याद्राजाऽपि तत्फलांशभाक्॥४॥
विना पुण्यं नैकगुणो लभ्यः पुंसां कदाचन ।
तस्माद्‌ गुणवतां रक्षा सैन्यरक्षाऽधिका मता ॥ ५ ॥
एकोऽपि गुणवान् लोके सहस्राणां सुसंग्रहे ।
समर्थो विमतो भङ्गे नानारूपधरो गुणी ॥ ६ ॥
गुणे मुह्यन्ति पशवस्तथा क्रूरा भुजङ्गमाः ।
गुणिनां सन्निधानं हि महामन्त्रप्रसाधकम् ॥ ७ ॥
बहवो वञ्चकाः क्रूराः सतां धर्म्मेण लिङ्गिनः ।
महतां भागमादातुं वञ्चयन्ति महीभृतम् ॥ ८ ॥
सन्तः क्लेशपरा भूत्वा विद्विषन्तो नृपश्रियम् ।
क्रमादुत्पादयन्त्येव विरोधं मानसं नृणाम् ॥ ९ ॥
कालाद्‌ विरोधी यो वह्निस्तृणराशिरिव क्रमात् ।
बध्यते राजमातङ्गः पतङ्ग इव निष्क्रदः ॥ १० ॥
यदि चैकस्य दृष्टिर्न सर्व्वत्र परिगच्छति ।
प्रायशश्छादकाः क्रूरास्तत्त्ववित् स्यान्नरेश्वरः ॥ ११ ॥
तस्माद्राजा स्वयं देशानमात्यान् वापि चारयेत् ।
सतां धर्म्मरतान् वृद्धान् कुलजान् विदुषोऽखिलम्॥१२॥

समसद्भावचेष्टाद्यैः प्रजाभिश्चिरसंस्थितः ।
श्रुत्वा च कर्म्मणा वाचा व्यवहारैः परीक्षयेत् ॥१३॥
परीक्ष्य गुणवद्भ्यस्ते यथाज्ञानं तथादिशन् ।
इन्द्रत्वं लभते भूपो जनैः स्वर्गनिवासिभिः ॥ १४ ॥
बहवः शास्त्रसम्पन्ना महद्वेशधराः शठाः ।
उत्तापयन्ति दुर्वृत्त्या ग्रामिकान् सरलान् जनान्॥१५॥
भयमैत्र्यादियोगेन हरन्ति धनसञ्चयम् ।
तेभ्यो यत्नेन कर्त्तव्या प्रजारक्षा महीभृता ॥ १६ ॥
स्वार्थं पश्येत् सदा राजा किन्तु शाठ्यं विवर्ज्जयेत् ।
स्वार्थे परार्थसंसिद्धिं साधयित्वा क्रियां चरेत् ॥ १७ ॥
प्रजानां परिपोषाय स्थाने स्थाने महीपतिः ।
स्थापयेत् कोषमात्मीयं काले दद्याद् धनानि च॥१८॥
भागहारेण गृह्णीयात् शस्यानामुद्भवक्रमात् ।
नोत्पीड़येदुत्सृजेद्वा प्रजारञ्जनतत्परः ॥ १९ ॥
यावत् कार्य्यविभागोऽस्ति विभज्य तानि यत्नतः ।
यथालाभं व्ययेदर्थान् स्थाप्यो भागश्चतुर्थकः ॥ २० ॥
प्रणालीं मरुदेशेषु सेतुबन्धं जलप्लवे ।
कृत्वा सम्बर्द्धयेत् शस्यं येन हीनं न तद्भवेत् ॥ २१ ॥
हिंसकानाञ्च जन्तूनां नाशाय स्थापयेज्जनम् ।
पशुं शस्यं जनं रक्षेद् येन बाधा विनश्यति ॥ २२ ॥

सञ्चारो वणिजां यत्र पथिकानां तथैव च ।
तं देशं यत्नतो रक्षेद् दस्युतो हिंस्रसत्त्वतः ॥ २३ ॥
अनाथानां धनं रक्षेत् समयाद् वृद्धिमर्पयेत् ।
वर्द्धयेद् वणिजा नित्यं पोषयेत् तान् निदेशिना॥२४॥
दुर्भिक्षपाते शष्याणां दाने रक्षेत् प्रजाः सदा ।
ग्रामाणां स्थापयेन्मध्ये नगरं सरितां तटे ॥ २५ ॥
उर्व्वरां धरणीं दृष्ट्वा वने वा पर्व्वतान्तिके ।
ग्रामान् निवेशयेद्राजा वनशष्यादिकार्पणात् ॥ २६ ॥
न वनं सर्वथा छेद्यं रक्ष्यं यत्नेन भूभृता ।
विहारे राजविद्रावे शरणं वनमेव हि ॥ २७ ॥
विशेषतो महानद्याः समुद्रस्य तटे वनम् ।
रक्षणीयं प्रयत्नेन दुष्टवातादिशान्तये ॥ २८ ॥
शष्यलोभेन सत्क्षेत्रं लवणाद्यैर्न दूषयेत् ।
कालेन सकलान् देशान् दोषः कुर्य्याद्गतौजसः ॥२९॥
धनलोभेन शष्यादीन् न कुर्य्याद् देशविच्युतान् ।
वैदेशिकान् समादद्याद् दत्त्वाऽपि द्विगुणं पणम्। ३०॥
हस्त्युष्ट्रवृषभादीनि वने वन्यैः प्रपालयेत् ।
साधयेद् योगजं वंशं तेषां वीर्य्यविलोकनैः ॥ ३१ ॥
स्थापयेत् फलपुष्पादिसाधनं तरुसञ्चयम् ।
नाशयेद् विषवृक्षादीन् फलमालोक्य यत्नतः ॥ ३२ ॥

अनुपद्रविनो भूपाः प्रायशः स्वार्थतत्पराः ।
स्वप्रजोत्पीड़ने रक्ता भवन्ति मदमोहिताः ॥ ३३ ॥
य एवं मदसम्मत्ताः कुर्वन्ति स्वजनव्यथाम् ।
तेऽचिरेणैव कालेन हतराज्या हतोदयाः ॥ ३४ ॥
तस्मादकण्टकं राज्यं लब्ध्वा नोन्मादसंयुतः ।
नोत्पीड़कस्तथा भूयाद् येन सर्वे विरोधिनः ॥ ३५ ॥
धर्म्मशालां पान्थशालां नगरं देवमन्दिरम् ।
विद्यालयं जलौकश्च मार्गं सेतुं तथैव च ॥ ३६ ॥
मध्ये मध्ये स्वराज्यस्य कारयेत् पृथिवीपतिः ।
येन साधारणाः प्रीताः प्रसन्नाः स्युर्महीभृति ॥ ३७ ॥

राज्यस्थितिव्यवस्था ।

मरौ च नगरे ग्रामे मार्गेऽरण्ये गिरौ जले ।
सर्व्वत्र स्थापयेत् सैन्यं सम्भवेद् यत्र बाधनम् ॥ १ ॥
स्वराज्यसीमा यत्रास्ति तत्र दुर्गं समाचरेत् ।
यत्र वाऽन्यस्य सञ्चारो जले वा पर्व्वते वने ॥ २ ॥
तद्दुर्गमभिरक्ष्येत सैन्यैः शस्त्रधरैः सदा ।
तत्रातिकालं नाध्यक्षं स्थापयेन्न जनांस्तथा ॥ ३ ॥
तेऽपि कालात् सुखासक्ता दास्यवृत्तिपराङ्मुखाः ।
अन्येन सह सम्बन्ध्य स्वातन्त्र्यं कर्त्तुमुद्यताः ॥ ४ ॥
एवं यद्वैपरीत्येन राज्योपद्रवसम्भवः ।
न रक्ष्यः स चिरं दासः पदे कस्मिन् महीभृता ॥५॥

तत्र दाक्ष्यं समालोक्य स्थापयेत्तं स्वसंसदि ।
तत्तत्कार्य्यविवेकार्थं स स्थितो यत्र कर्म्मणि ॥ ६ ॥
यो न दक्षः सोऽपि राज्ञा माननीयो धनादिना ।
उच्चस्थो नीचतामाप्तुं न चार्हति कदाचन ॥ ७ ॥
स ज्ञाततत्त्वो राज्यानामवज्ञातो भवेद् यदि ।
द्वेषात् शात्रवमाश्रित्य राज्यं नाशयितुं क्षमः ॥ ८ ॥
एवं कर्म्मज्ञयोगेन सभां कृत्वा नराधिपः ।
कारयेत् कर्म राज्यस्य प्रीत्या ह्यात्मानुरूपया ॥ ९ ॥
दुष्टाभिसन्धिं सम्पश्येद् यदि तत्र नराधिपः ।
छलाद् बलात् कौशलाद्वा तेषां बन्धोऽथवा हतिः॥१०॥
न स्वतन्त्रो भवेद्राजा कार्य्याणां परिवीक्षणे ।
नैकस्याव्याहता बुद्धिः सर्वत्र परिचारिणी ॥ ११ ॥

शिक्षाविधिः ।

प्राप्तबोधो नरेशानो भाषादिज्ञानतत्परः ।
विषयेषु समासीनः शिक्षामेवं समाचरेत् ॥ १ ॥
स्वाधिकारेषु युक्तानां महतां सन्निधिक्रमात् ।
दानैर्मानैः प्रियालापैस्तोषयन् प्रीतिसंयुतः ॥ २ ॥
देशजातिक्रियाविद्याधर्म्मव्यवहृतादिषु ।
यथातत्त्वं विजानीयादेकान्ते मित्रसंसदि ॥ ३ ॥
स्वोत्तमं प्रणयाद् भक्त्या पालनेन पवित्रधीः ।
विज्ञातानां चरेन्मूलं विषयो दुश्चरं वनम् ॥ ४ ॥

चेष्टामपि च सर्व्वेषामौदासीन्येन लोकयन् ।
व्यवहारैः क्रियाभिश्च साधयंस्तत्त्वमाचरेत् ॥ ५ ॥

राज्यविभागादि ।

स्वप्रजासभ्यतन्त्रत्वाद् राज्यं हि त्रिविधं स्मृतम् ।
लोकानां बुद्धिवैचित्र्याद् व्यवस्थेयं पृथक् पृथक् ॥१॥
स्वतन्त्रे स्वार्थसम्ब्याधी कर्त्तुमन्याय्यमर्हति ।
स्वयं द्रष्टा यतो राजा को वा वारयितुं क्षमः ॥ २ ॥
प्रजातन्त्रं यदिश्रेयो राजहीनतया पुनः ।
न तादृक् शोभते संसद् विधवा कामिनी यथा ॥३॥
प्रजातन्त्रे महानेको दृश्यते सद्गुणोदयः ।
आबालवृद्धवनिताः प्रजास्तद्रक्षणोत्सुकाः ॥ ४ ॥
अपक्षपातः सभ्यानां यदि राज्ये प्रवर्त्तते ।
न प्रजातन्त्रतो हीनं सभ्यतन्त्रं कथञ्चन ॥ ५ ॥
विलोक्यते सभ्यतंत्रे वरमेको महान् गुणः ।
न स्यात् सिंहासनं शून्यं धरणीनायकं विना ॥ ६ ॥
एवञ्चेद्राजतन्त्रं स्यात्तदपि श्रेयसाम्पदम् ।
किन्त्वेवं ज्ञानवानेको दुर्लभो जगतीतले ॥ ७ ॥
य एको वैभवाद् बुद्धेः सर्व्वसंग्रहकारकः ।
विजेता बाहुवीर्य्येण स देवः स स्वयं प्रभुः ॥ ८ ॥
य एको लोकचक्राणामधिष्ठाता दुराक्रमः ।
स यत् कुर्य्यात् तद्धि धर्म्यं कोऽप्यस्य विनिवारकः॥९॥

राज्यं लब्ध्वा हीनवीर्य्यः प्रभुश्चेत् कुलजोऽपि वा ।
संरक्षणार्थं राज्यस्य कुरुते विविधां क्रियाम् ॥ १० ॥
निर्वीर्य्ये कुलजे राज्ञि एवं संश्रेयसे मतम् ।
कः शूरः समरोत्साही वशं गच्छेन्नृणामहो ॥ ११ ॥
एकः सर्व्वान् वशे कृत्वा नीतिज्ञान् कारयेत् कृतिम् ।
तत्तेजसाभिभूताः स्युः सर्वे स प्रभुरेककः ॥ १२ ॥
नाममात्रं प्रजातन्त्रं सभ्यतन्त्रं च तादृशम् ।
नियन्तारं बिना नैव तद्द्वयं सिद्धिमर्हति ॥ १३ ॥
यो नियन्ता भवेत्तेषां स्वबुद्ध्या सर्वसम्मतः ।
स एव राजा विज्ञेयः सर्वभोक्ताखिलःप्रभुः ॥ १४ ॥

अभ्युदयकालापद्विवेकः ।

राज्यमेतद् यथानित्यं धर्म्मार्थकाममोक्षदम् ।
तथातिभयदं ज्ञेयं वैरिबाधासमन्वितम् ॥ १ ॥
बलवन्तो वीर्य्यवन्तस्तपसा लब्धविग्रहाः ।
यतन्ते शत्रवो नित्यं बलाज्जेतुं महीमिमाम् ॥ २ ॥
लोकाद् भयेष्ववेद्राजा राज्ञो भीतौ क्व रक्षकः ।
तस्मान्नित्यं रिपोर्हस्तात् पृथिवीं रक्षयेन्नृपः ॥ ३ ॥
दैवहीनं रिपुं जेतुं यायाद् दैवान्वितो नृपः ।
योज्या दैवान्वितामात्या दैवहीने तथात्मनि ॥ ४ ॥
व्यसनी नष्टधर्म्मा यस्त्रिविधोत्पातपीड़ितः ।
स दैवहीनो विज्ञेयस्तदन्यो दैवसम्वृतः ॥ ५ ॥

दैवञ्चालौकिकं विद्यादन्यजन्मक्रियोद्भवम् ।
शुभानां कर्म्मणां वृद्ध्या तद्दैवमनुमीयताम् ॥ ६ ॥
सापेक्षत्वादनादित्वाद् वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ॥ ७ ॥
यद् यत् कामयते राजा तदा तत् साधयेत् क्षणात् ।
तदा पौरुषसंयुक्तो ज्ञायतां पृथिवीपतिः ॥ ८ ॥
तथा कालोऽपि विज्ञेयः सिद्धये कर्म्मणां बली ।
तस्मात् कालं प्रतीक्षेत जयं प्रेप्सुर्नराधिपः ॥ ९ ॥
दैवं पुरुषकारश्च कालः समुदितस्तथा ।
त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलावहम् ॥१०॥
कृषेर्वृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः ।
तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन ॥ ११ ॥
आध्यात्मिक आधिदैव आधिभौतिक एव च ।
उत्पातस्त्रिविधो ज्ञेयो राज्यसम्पत्तिनाशकः ॥ १२ ॥
शरीरं मानसं व्याप्य यः क्लेशः परिजायते ।
आध्यात्मिकः स विज्ञेयो रोगचिन्तादिकः खलु ॥१३॥
ग्रहनक्षत्र भूतादेर्यस्तापः परिजायते ।
आधिदैव इति प्रोक्तः स उत्पातो मनीषिभिः ॥१४॥
पशुपक्षिपतङ्गादेर्या बाधा दृश्यते यदा ।
आधिभौतिक उत्पातः स विज्ञेयस्तदा बुधैः ॥ १५ ॥

सामादिव्यवस्था ॥

उत्पाते च समुत्पन्ने मानवा द्वेषसंप्लुताः ।
यतन्ते नृपतेः राज्यमधिकर्त्तुमितिस्थितिः ॥ १ ॥
साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।
विजेतुं प्रयतेतारीन् न युध्येत कदाचन ॥ २ ॥
अनित्यो विजयो यस्माद् दृश्यते युध्यमानयोः ।
पराजयो हि संग्रामे तस्माद् युद्धं विवर्जयेत् ॥ ३ ॥
सामसन्धिः समाख्याता दानं भूम्यादिकार्पणम् ।
भृत्यामात्यप्रजादीनां विच्छेदो भेद उच्यते ॥ ४ ॥
तुल्येऽधिके तथा हीने सामदानादिकं भवेत् ।
यो यथा स्यात्तथा योगैः शमनीयो रिपुर्नृपैः ॥ ५ ॥
स्पष्टतः प्रेषयेद् दूतं निर्भयं रिपुसंसदि ।
राजा स्वाभीप्सितालेखैः सामादि परिसूचकैः ॥ ६ ॥
न प्रकाश्यं भयं तत्र न रूक्षं न च कोमलम् ।
परस्परहिते योग्यं नीतिमार्गेण रञ्जितम् ॥ ७ ॥

दूतप्रेषणादि ।

दूतो वाग्मी सभादक्षो यः स्वयं कर्त्तुमर्हति ।
अथवा सम्प्रेषणीयो यावद्भाषितहारकः ॥ १ ॥
स्पष्टतो रूक्षसम्भाषी न दूतो दण्डभाग् भवेत् ।
दूतदण्डे यथातत्त्वविज्ञानं दुर्लभं भवेत् ॥ २ ॥

भयाद्वा प्रणयाद्वापि दूतः किञ्चिन्न गोपयेत् ।
गोपने कार्य्यहानिः स्याद् दूतो दण्डार्हतां चरेत्॥२॥

गूढ़चारप्रेरणादि ।

सम्प्रेष्य स्पष्टतो दूतं गूढ़ं चारं नियोजयेत् ।
नानारूपधरं विज्ञं नानाभाषाविशारदम् ॥ १ ॥
भृत्यामात्यसैनिकानां प्रज्ञानां शुद्धचेतसाम् ।
अनुरक्तिं विरक्तिम्वा रिपोर्विंद्यात्ततो नृपः ॥ २ ॥
व्यसनासक्तचित्तो वा निस्तन्द्रो वा स्वसम्पदि ।
रिपुरित्यधिगन्तव्यं तेन प्रच्छन्नवृत्तिना ॥ ३ ॥
तेन स्थानं विजानीयाद् रिपुराज्यस्य सर्व्वतः ।
प्रास्थानिकं यानयोग्यं छादनार्हं सुदुस्तरम् ॥ ४ ॥
जलाशयं जलं कोषमन्नं दुर्गं मरुं गिरिम् ।
शस्त्रं यानं विजानीयात् तत एव महीपतिः ॥ ५ ॥
एष एव नरेन्द्राणां परमं चक्षुरुच्यते ।
तस्मादेतं प्रयत्नेन पालयेत् प्राणतोऽधिकम् ॥ ६ ॥
वरिष्ठो गूढ़चारेषु प्रायो लिङ्गी मतो बुधैः ।
यस्मादव्याहतं यानमस्य सर्व्वत्र दृश्यते ॥ ७ ॥
नीचैर्वा धनिभिर्वापि बालैर्वृद्धैश्च पूज्यते ।
विशेषतो विप्लवेषु निराबाधगतिस्त्वयम् ॥ ८ ॥
तीर्थदेवादिसेवार्थं सर्व्वत्र सञ्चरन्नसौ ।
स्वच्छन्दतो ज्ञातुमर्हेद् रिपोः स्थानं यथास्थितम् ॥९॥

सिद्धत्वादिमिषं स्वस्मिन् विधाय कपटान्तरः ।
उच्चाटनमारणादि कुर्य्यात् तत्त्वबुभुत्सया ॥ १० ॥
आबालवृद्धवनिताः प्रायो मुह्यन्ति दैवतः ।
देववत् तं सेवमाना गुह्यवृत्तं वदन्ति च ॥ ११ ॥

भेदव्यवस्था ।

एष एव महादक्षो भेदे शत्रोः प्रगीयते ।
अनेनैव साधनीयो भेदः स्वद्विषतान्ततः ॥ १ ॥
एष एव रिपो राज्ये गत्वा नियममाश्रितः ।
प्रविशेत् सम्मतो राज्ञः सभायां यतिवृत्तिभाक् ॥ २ ॥
उत्पादयेत् सुविश्वासं येन राजा विमुह्यति ।
स्नानानशनवैराग्यसम्पदा सिद्धतां गतः ॥ ३ ॥
सर्व्वैः सुसम्मतो भूत्वा सर्व्ववृत्तिनिरोधतः ।
गूढ़शाठ्येन सद्वृत्तं दूषयंस्ताड़येच्छलात् ॥ ४ ॥
दापयंस्तौषिकं वस्तु रोषयन्नन्यमुद्धतम् ।
नृपं विद्वेषयंस्तौ तौ छलयेद् भूपतिं तथा ॥ ५ ॥
एकमुन्नमयन्नन्यं ह्रासयन् द्वेषयन् परम् ।
दूषयंश्छलयन् नित्यं भेदयेदखिलान् जनान् ॥ ६ ॥
येन सम्प्रेषितो भूयाद् दूषयं स्तं प्रसङ्गतः ।
भीषयेत् तद्दुराचारात् कार्य्यसाधनतत्परः ॥ ७ ॥
दुर्वृत्तान् पालयेद् राज्ञा तेषां वृत्तिप्रशस्तितः ।
तानप्युल्लासयेद् भोगैर्मोहयन् भूपतिं सदा ॥ ८ ॥

मोहितोऽसौ यथा भोगैः कालं स्वच्छन्दतो नयेत् ।
प्रायशो भोगमुग्धा हि धनिनो भूभृतोऽपि च ॥ ९ ॥
शुक्रस्तम्भाद्यौषधादि दत्त्वा प्रीतिं विवर्द्धयेत् ।
काव्यसङ्गीतचर्च्चादि कारयेच्चित्तरञ्जनम् ॥ १० ॥
व्यसनोत्साहकान् दासान् प्रीत्या सन्तोषयन् सदा ।
हारयेद्राजसंग्राह्यं तैर्दुष्टैः क्रमशश्छलात् ॥ ११ ॥
मन्त्रिणो वणिजः सैन्यं सर्व्वाण्युत्सारयेत् क्रमात् ।
देवकृत्ये समुत्साहं दद्याच्च सततं छलात् ॥ १२ ॥
राज्यादीनामस्थिरत्वं धर्म्मस्य चिरजीवनम् ।
दर्शयन् वञ्चयेद् भूपं येन राजा जड़ो भवेत् ॥ १३ ॥
मूर्खभावैः समाविश्य राजानं तोषयेत् सदा ।
ये सदा तोषवाक्येन तोषयन्ति तदाकृतिम् ॥ १४ ॥
मूर्खैः सदा समाकृष्टं वञ्चितं साधुवृत्तिभिः ।
विलोक्य भूपतिं गच्छेत् तीर्थादिश्छलतस्ततः ॥ १५ ॥
एवं कुर्य्यान्नृपो यत्नाल्लिङ्गिभिर्वञ्चनं रिपोः ।
स्वयञ्चावञ्चितो भूत्वा नीतिमार्गपरः स्थिरः ॥ १६ ॥
अथवा तरुणी रम्या नाट्यगीतिविशारदा ।
प्रेषणीया प्रयत्नेन या क्षणात् स्यान्मनोहरा ॥ १७ ॥
तया व्यसनिनं कुर्य्यात्तथा शत्रुं निरन्तरम् ।
यथा न पश्येद् विषयं भोगसंसक्तमानसः ॥ १८ ॥

एवं यथायथोपायै रिपुः स्याद् व्यसनी सदा ।
तथोपायो विधातव्यो निस्तन्द्रेण महीभृता ॥ १९ ॥
प्रतीपे व्यसनासक्ते तज्जनान् स्ववशं नयेत् ।
प्रीत्या दानेन मानेन लोभयन् स्वार्थसाधनः ॥ २० ॥
अवध्यो यदि वा चारो नैष तादृङ्मतो भवेत् ।
अस्य विज्ञानमात्रेण शिरश्छेदो विधीयते ॥ २१ ॥
एवं चारेण गूढ़स्थं वृत्तान्तमवलोकयन् ।
सामादिषु यथान्यायं विदधीत नराधिपः ॥ २२ ॥

दूतागमे कर्त्तव्यम् ।

समागतं तथा दूतं सम्भाष्य न्यायवर्त्मना ।
आलेख्यं प्रतिभूभर्त्तुः प्रतिगृह्य विचारयेत् ॥ १ ॥
स्वेष्टं परेष्टं लोकानां हिताहितविधिं तथा ।
तथा स्वीयपरानिष्टं मन्त्रिमुख्यैः सुमंत्रयेत् ॥ २ ॥
सुविचार्य्य गुणौ दोषौ तथा मानापमानकौ ।
स्वबलानां बलं ज्ञात्वा तदुत्तरमथार्पयेत् ॥ ३ ॥
यस्मान्न वीर्य्यहानिः स्यान्नावमानः परस्य च ।
न शात्रवं न वा मैत्रं न भयं न च तर्ज्जनम् ॥ ४ ॥
परदूताभिगमने राज्यं संस्कारयेत् तथा ।
येन सर्व्वे क्रियारक्ता दिवारात्रं कृतोद्यमाः ॥ ५ ॥
तेन संलापनं राजा महद्भिः सैनिकैर्वृतः ।
तीक्ष्णवृत्तिर्भीमरूपः कुर्य्यान्निर्भयमानसः ॥ ६ ॥

सन्ध्यादिनियमः ।

सर्व्वतः श्रेयसे सन्धिः सामदानादिकं परम् ।
सन्धिं कृत्वापि शत्रूणां भेदे यत्नं समाचरेत् ॥ १ ॥
दूरेऽस्तु द्विषतां वार्त्ता न विश्वास्यः सुहृत् पुनः ।
सर्व्वथा सर्व्वदा सर्व्वतत्त्व मन्वेषयेन्नृपः ॥ २ ॥
पुत्त्रोऽपि पितरं हन्ति शिष्यं हन्ति गुरुस्तथा ।
नहि राज्यकृते काचित् कार्य्याकार्य्यव्यवस्थितिः॥३॥
सामदानादिकं यद्वद् भूभृता सह जायते ।
तथा तमनुगच्छन्ति ये समर्थाः क्रियाविधौ ॥ ४ ॥
तथासन्धिर्न कर्त्तव्या क्रियायां यत्र मानवाः ।
कुर्व्वन्त्यवज्ञां स्वस्यापि वीर्य्यहानिः प्रजायते ॥ ५ ॥
दानं तथा न कर्त्तव्यं भूभृता यस्य दानतः ।
राज्यं हीनबलं भूत्वा द्रुतं गच्छेदरेः करम् ॥ ६ ॥
तथासन्ध्यर्पणाभ्यान्तु समरः श्रेयसाम्पदम् ।
राज्यनाशे माननाशे किं जीवैर्नश्वरैर्भवेत् ॥ ७ ॥
उक्तेन गूढ़चारेण मेलयेदन्यभूपतिम् ।
मैत्रैर्दानैर्भयालोकैर्यै यथा स्ववशं गताः ॥ ८ ॥
जानीयादपि शत्रूणां तेन मित्रं रिपुं तथा ।
रिपुं सम्मेलयेन्मित्रं सामाद्यैर्वशमानयेत् ॥ ९ ॥

युद्धविधिः ।

त्रयाणामप्युपायानां पूर्व्वोक्तानां परिक्षये ।
तथा युध्येत संयत्तो विजयेत रिपून् यथा ॥ १ ॥

संग्रामे साहसैः साध्ये दुर्व्वलो बलवान् भवेत् ।
साहसेन विना दीनो बलवानपि जायते ॥ २ ॥
सोत्साहे समरे नाशो जायते कुशलास्पदम् ।
निरुत्साहस्य राज्यैर्वा भोगैर्वा किं फलं भवेत् ॥ ३ ॥
शरत्समागमे राजा निस्तापे स्वच्छजीवने ।
दृष्ट्वानुकूलं स्वं दैवं व्रजेत् शत्रुविमर्द्दने ॥ ४ ॥
स्वरोदयमभिध्याय सूर्य्ये वहति मारुते ।
वर्ज्जयन् सूर्य्यसाम्मुख्यं चरेदुग्रदिने नृपः ॥ ५ ॥
स्वराज्यं रक्षयेद् यत्नाद् विश्वस्तैर्मन्त्रिसैनिकैः ।
निर्गतौ स्वस्य येनान्यो नोत्पातं कर्त्तुमर्हति ॥ ६ ॥
प्रवृत्ते रिपुसंग्रामे सर्व्वत्र पृथिवीपतिः ।
स्ववीर्य्यं काशयेत् तीक्ष्णं नित्यं निस्तन्द्रनिर्भयः ॥७॥
नित्यं लोकार्थतत्त्वज्ञो नित्यं लोकानुरञ्जकः ।
नित्यं धर्म्मपरोत्साही व्यसनेषु निरुत्सुकः ॥ ८ ॥
विरोधीत्येव मात्रेण शिरश्छित्त्वा निपातयेत् ।
तीक्ष्णो दण्डविधौ दासान् साहसैरभियोजयेत् ॥ ९ ॥
यो लोकसंग्रहे शक्तो यो वा शक्तो धनार्ज्जने ।
सर्व्वांस्तान् यत्नतो रक्षेन्मन्त्रो न स्याद् यथोभयोः॥१०॥
सर्व्वे सामरिका लोका बलवन्तश्च ये पुनः ।
समुत्साहैर्योजनीया दानमानादिकार्पणैः ॥ ११ ॥

यावद् दुर्गं सुसंस्कार्य्यं कुर्य्यादस्त्रादिसाधनैः ।
पूरितं चान्नपानाद्यै र्नीतिमानवनीपतिः ॥ १२ ॥
देशेष्वन्नं समारक्षेदन्यस्मादपि चानयेत् ।
दिवारात्रं मन्त्रिमुख्यै र्न्याय्यान्याय्यं विचारयेत् ॥१३॥
विभज्य सैन्यं सञ्चाल्य सशस्त्रान्नं सनाथकम् ।
आवृत्य रिपुसाम्राज्यं स्थापयेन्मण्डलं महत् ॥ १४ ॥
यत्र यत्र यदा तिष्ठेद् भोज्यपाने सुरक्षयन् ।
परीक्ष्य कारयेत्तत्र तयोः संसेवनं नृपः ॥ १५ ॥
विरोधिनामन्नपाने गूढ़चारेण सर्व्वदा ।
विषाद्यैरभिसंयोज्य तत्त्वं विद्यान्नराधिपः ॥ १६ ॥
स्वचक्रेऽन्याप्रवेशार्थं प्रतियामं नवं नवम् ।
सङ्केतमभिसम्पाद्य स्ववृत्तं गोपयेन्नृपः ॥ १७ ॥
सङ्केतचारिणां दद्यात् प्रवेशं निजमण्डले ।
अन्यथा ताड़येत्तस्मान्नाशयेद्वा महीपतिः ॥ १८ ॥
अदूरेऽनेकतः स्थाने स्वराज्यावधिवर्त्तिनि ।
अन्नपाने क्रमाद्रक्षेत् ते एव जीवनं नृणाम् ॥ १९ ॥
अभावेऽन्नस्य तद्देशात् स्वदेशाद्वा परिग्रहः ।
तद्विरोधी निहन्तव्यो बलादन्नपरिग्रहैः ॥ २० ॥
न्यायान्यायौ नेक्षितव्यौ जाते हि समरोद्यमे ।
येन जीवेन्निजं सैन्यं स न्यायस्तत्र शाश्वतः ॥ २१ ॥

वैदेशिकेषु विश्वासो न कार्य्यस्तत्र कुत्रचित् ।
विक्षेपमनुमालोक्य नाशनं श्रेयसे मतम् ॥ २२ ॥
उत्तमा निजराज्यस्था मित्राधीनाश्च मध्यमाः ।
उदासीनपदासीना अधमाः परिकीर्त्तिताः ॥ २३ ॥
कदाचिन्नैव रक्ष्याः स्युः शत्रुराज्यनिवासिनः ।
तेचेत्तद्विषयान् जह्युस्तत्तान् यत्नेन पालयेत् ॥ २४ ॥
सर्व्वैं स्वजनपोषार्थं दास्यादिषु नियोजिताः ।
स्वजनैर्यदि राज्यस्था भवेयुस्तद्भयं कुतः ॥ २५ ॥
तद्देशीयं यथालाभमौदासीन्येन मोहयन् ।
नानारूपधरं कृत्वा प्रेषयेद्रिपुमण्डले ॥ २६ ॥
यदा यदाक्रमेद्राजा वलवन्तं छलैर्वलैः ।
आक्रम्यस्ववशे कुर्य्याच्छिन्नपक्षविहङ्गवत् ॥ २७ ॥
तेन संसाधयेदन्नं जनस्वा वाह्लिकादिकम् ।
असतश्चेद्धनं हत्वा शिरश्छित्त्वा प्रताड़येत् ॥ २८ ॥
आनीय स्ववशे तस्मान्मैत्रोत्साहच्छलादिभिः ।
प्रतीपस्य वलं वीर्य्यं विद्याद् वृत्तं च तत्त्वतः ॥ २९ ॥
न तत्र सैन्यं संग्राह्यं सैन्याभावेऽपि भूभृता ।
वरं प्रत्यागमः श्रेयान् न पुनस्तत्र संग्रहः ॥ ३० ॥
यदि तद्भूपतेर्दोषाल्लोका विद्वेषकारिणः ।
तत्त्वं विद्यात्तदा तत्र कर्त्तव्यः सैन्यसंग्रहः ॥ ३१ ॥

वृत्तं ज्ञात्वा तु तत्त्वं न कुर्य्यात् सहसाश्रयम् ।
न परः सहसा मैनं प्रयाति स्वच्छभावतः ॥ ३२ ॥
ज्ञातवृत्तो महाघोरनिशायां छद्मचारिणा ।
द्विषतां वृत्तिमुद्बुध्य कुर्य्यात् कार्य्यं समाहितः ॥३३॥
यत्र संस्थापयेत् सैन्यं तत्पार्श्वे बहुदूरतः ।
चतुर्दिक्षु महाधीरं स्वचरं स्थापयेन्नृपः ॥ ३४ ॥
यो ज्ञाततत्त्वः शत्रूणां सम्वदेद् विविधां कृतिम् ।
येन वा सहसाक्रामि न भवेत् परसैनिकम् ॥ ३५ ॥
अरण्ये पर्व्वते ज्ञेयं तत्त्वं रात्रौ स्वसैनिकैः ।
व्याघ्रभल्लूकचर्म्मादिधरैः प्रच्छन्नवृत्तिकैः ॥ ३६ ॥
भिक्षुवेशधरैर्ग्रामे जले नाविकरूपिभिः ।
एवं यथा यथास्थानं तथा तत्र विधिं चरेत् ॥ ३७ ॥
वञ्चयेद् यदि तत्त्वस्तं हन्याद्धारयेद् धनम् ।
येनान्यो न तथा वादी पुनर्वञ्चनतत्परः ॥ ३८ ॥
विश्वस्तोऽपि सुविश्वास्यः सर्वथा न रणोद्यमे ।
विश्वस्तैर्बहुभिः स्वामी वञ्चितः स्वार्थलिप्सया ॥३९॥
परस्परकृता चेष्टा जागर्त्ति रिपुसंसदि ।
सर्वे नयविदो भूपाः स्वार्थसाधनतत्पराः ॥ ४० ॥
भीतिमेवाचरेत् तस्मात् परतः परभेदवान् ।
यथा स्वयं छिद्रदर्शी न तथा किं परो भवेत् ॥ ४१ ॥

यस्य भ्रमो वालस्यं वा स नाशमधिगच्छति ।
तस्मादनलसो भूत्वा निस्तन्द्रः स्यान्महीपतिः ॥ ४२ ॥
चेद् द्वयोस्तुल्य उद्योगः सन्धिः करगता तदा ।
तस्मान्नित्यं समुद्युक्तो भुङ्क्ते राज्यमकण्टकम् ॥४३॥
एवं नीतिमुपाश्रित्य चक्रं संस्थाप्य यत्नतः ।
यावद्गन्तव्यदेशेषु स्थापयेद् यानमुत्तमम् ॥ ४४ ॥
तिष्ठतामन्यसाम्राज्ये न देयं सैनिकं पदम् ।
दत्तेऽपि समरे प्राप्ते नैषामालम्बनं बलम् ॥ ४५ ॥
आलम्बनेऽपि तत्संघो न कर्त्तव्यः कदाचन ।
स्वजनैः संवृतं कृत्वा सेनायां तं निवेशयेत् ॥ ४६ ॥
निवेश्यापि स्वगुह्यं तं बोधयेन्न कदाचन ।
जानन्तं रक्षयेद् यत्नादन्यसम्मेलनान्नृपः ॥ ४७ ॥
बहवो वञ्चिता भूपा भेदाद् वैदेशिकैः पुरा ।
सावधानेन सततं तेन भाव्यं महीभृता ॥ ४८ ॥
चक्रस्य पार्श्वतो रक्षेत् स्थानं विस्तीर्णमुज्ज्वलम् ।
सम्मुखं सुमहत् स्थाप्यं यत् स्यात् सामरिकास्पदम् ४९
न सर्व्वं सैन्यमादाय तत्र गच्छेत् कदाचन ।
सोपानमिव संस्थाप्य स्वराज्यात्तत्र सैनिकम् ॥५०॥
नित्यं गतागतैस्तस्य भीषयेत्तान् जनान् सदा ।
ये गत्वा प्रतिभूपालं भीषयन्ति भयेक्षणैः ॥ ५१ ॥

उत्साहो वीर्य्यसंघोषो वन्धस्त्वादिनियोजनम् ।
प्रतिक्षणं विधातव्यं येन शत्रुर्विषीदति ॥ ५२ ॥
रात्रौ प्रच्छन्नचारेण सर्वतस्तत्त्वमाहरेत् ।
रक्षयेन्मण्डलं स्वस्य निशासु दिवसादपि ॥ ५३ ॥
स्रोतः पतनदेशेषु न तिष्ठेन्नीतिमान् नृपः ।
यतो गच्छति तत्रस्थो रुन्ध्याद्वा विषमर्पयेत् ॥ ५४ ॥
न तिष्ठेद्वनपार्श्वेषु न वा पर्वतपार्श्वतः ।
तिष्ठेच्चेत् पार्श्वतो रक्षेद् यतोऽन्यो न व्रजेद्रहः ॥५५॥
प्रच्छन्नवेशिनो दस्यून् प्रेषयेदरिमण्डले ।
ये गत्वा ग्रामदाहाद्यैर्विद्रवन्ति जनान् सदा ॥ ५६ ॥
हारयेत् पथि भक्ष्याणि नाशयेदग्निदाहनैः ।
योजयेद्वापि गरलैर्वाहिनो वा विनाशयेत् ॥ ५७ ॥
भेदयेद् दानभीत्याद्यैः संग्रामनिपुणान् जनान् ।
पलायन्ते यथा ते वै सन्तुष्टा वा भयाकुलाः ॥ ५८ ॥
एवं चेत् सामदानादि सिध्येत् तदपि मङ्गलम् ।
नैवच्चेत् स्वबलैर्मत्तो हन्यात् शत्रूनतन्द्रितः ॥ ५९ ॥
अनुकूलं दिनेशानं पवनं च विलोकयन् ।
व्यूहं संयोजयेद् यत्नाच्चक्रकूर्म्मादिरूपिणम् ॥ ६० ॥
कालेऽस्मिन् धर्म्मयुद्धेन दुर्लभो विजयो यतः ।
छद्मना तेन युध्येत यथा कालस्तथा नृपः ॥ ६१ ॥

स्वयमश्वाधिसंरूढ़ो रणक्षेत्रपुरोगमः ।
प्रोत्साहयन् स्वसैन्यानि योद्धुमाज्ञापयेन्नृपः ॥ ६२ ॥
नृपतिर्यत्र समये स्वयं न स्यात् पुरोगमः ।
कमपेक्ष्य प्रजाः सर्व्वाः प्राणांस्त्यक्तुं समुद्यताः ॥६३॥
प्रजाः सम्पाल्य धर्म्मेण चेद् गच्छेत् समरे पुरा ।
क एवं पामरो लोके यस्तदर्थं न सञ्चरेत् ॥ ६४ ॥
नैकदा सर्व्वसैन्यानां संग्रामः शुभदो भवेत् ।
सर्व्वेषु भ्रान्तियुक्तेषु को रक्षेन्नृपतिं तदा ॥ ६५ ॥
केचित् सांग्रामिकाः कार्य्याः केचित् पार्श्वाभिरक्षकाः।
कृतरेशास्तथा केचित् केचिच्चक्राभिरक्षकाः ॥ ६६ ॥
एवं जनेषु तिष्ठत्सु भ्रान्तानाकृष्य यत्नतः ।
अभ्रान्तान् योजयेत् तत्र संग्रामे धरणीपतिः ॥६७॥
भयेन यदि संग्रामे तेषु कश्चित् पलायते ।
तत्क्षणादेव तं हन्यान्नान्यः स्याद् येन तादृशः ॥६८॥
तथाज्ञालङ्घिनं हन्यादलसं च कुमन्त्रिणम् ।
द्रवयेन्मूर्च्छितं भीत्या रुग्नं वा नयविन्नृपः ॥ ६९ ॥
भक्ष्यपानाद्यौषधाद्यं रक्षेत् पश्चात् समाहितैः ।
येन सामरिकाः श्रान्ता लभेरन्निङ्गितादिभिः ॥७०।
तत्र वाहाः सुसंरक्ष्यास्तेषां पार्श्वेषु यत्नतः ।
स्वजनो घातमात्रेण येन दूरं प्रणीयते ॥ ७१ ॥

यथा स्वानहतान् विद्युः स्वजना द्विषतो हतान् ।
उपायमेवं कुर्व्वीत समुत्साहादिकार्पणैः ॥ ७२ ॥
न तिष्ठन् समरं कुर्य्यादाक्रमेद् बलपूर्व्वकम् ।
आक्रमे नाशनं श्रेयस्तिष्ठतां विपदां चयः ॥ ७३ ॥
आक्रम्य रिपुसैन्यानि मध्ये सम्पत्य वेगतः ।
एकोऽपि साधयेत् कार्य्यं सहस्रेण सुदुर्लभम् ॥ ७४ ॥
निर्भयत्वममोहित्वं प्रत्युत्पन्नमनीषिता ।
सर्व्वेष्वेवहि सम्पाद्या सैन्येषु विजयैषिणा ॥ ७५ ॥
स्वसैन्यं चिन्हितं कुर्य्यात् स्वस्वचिन्हेन भूमिपः ।
सम्मेलनेष्वचिन्हानां हन्ति स्वं स्वयमेव हि ॥ ७६ ॥
वृक्षाग्रं पर्व्वताग्रं वा समारुह्योच्चमेव वा ।
कर्त्तव्यं परसन्धानं कूटघाताभिलाषिणा ॥ ७७ ॥
दूरात् शब्दग्रहं यन्त्रं दूराद् वीक्षणसाधनम् ।
दूरात् स्पर्शग्रहं तादृक् दूराद् गन्धप्रसाधनम् ॥७८॥
आचरेयुः सदा युद्धे ये स्युर्योद्धृप्रचालकाः ।
द्रष्टॄणां गुणदोषाभ्यां जयाजयफलोदयः ॥ ७९ ॥
सम्मुखं कारयन् युद्धं पार्श्वेनाक्रामयन् रहः ।
निहन्यात् कूटयुद्धेन छलादरिवलं नृपः ॥ ८० ॥
एकं च समयं कृत्वा शत्रूनाहूय सङ्गरे ।
पलायनेन शत्रूणां वर्द्धयेज्जयसम्पदम् ॥ ८१ ॥

निश्चेष्टांस्तान् विलोक्याथ जयलाभेन हर्षितान् ।
विना समयमाक्रम्य नाशयेच्छद्मना नृपः ॥ ८२ ॥
अतः प्रतिमुखं दृष्ट्वा सहसा नाक्रमेन्नृपः ।
आक्रमेद् यदि स्वस्थानं रक्षयेद् वीर्य्यसञ्चयैः ॥ ८३ ॥
यत्र चक्रं रिपोस्तत्र भूमध्यखननादिना ।
विलैरुत्पाटयेत् तद्धि तीक्ष्णवस्त्वभियोजितैः ॥ ८४ ॥
तथावस्त्वभियोगेन वाष्पमुत्पाद्य यत्नतः ।
वायुना चालयेद् येन रिपवः स्युरुजाकुलाः ॥ ८५ ॥
अग्न्यास्त्रेषु तथावस्तु योजयेद् येन शत्रवः ।
स्पर्शगन्धादिना रुग्ना मूर्च्छिता निपतन्ति हि ॥८६॥
सम्मुखे रणभूम्यास्तु भित्तिराशींस्तथाचरेत् ।
यत्रस्था नाशकाः शत्रोर्न नाश्याः स्युर्निजा जनाः ८७
संस्थाप्य गोपने सैन्यं रणं त्यक्त्वा पलायितः ।
आक्रमन्तं रिपुं मध्ये पातयन् नाशयेच्छलात् ॥ ८८ ॥
पलायनपरान् शत्रून् पश्चादाक्रम्य वेगतः ।
ताड़यंश्छिन्नसंघांस्तान् कुर्य्यात् शस्त्रास्त्रविच्युतान् ८९
आक्रमे सर्व्वसैन्यानां न वेगः श्रेयसे मतः ।
कानिचिद् रक्षयेत् पश्चात् पश्चादाक्रमभीतिमान् ९०
ताड़िताः शत्रवश्चेत् स्युः श्रितदुर्गादयस्तदा ।
सम्भवश्चेच्चरन् पश्चात्तस्मिन्नप्याक्रमेद् बलात् ॥ ९१ ॥

अन्यथा वहिरासीनो दुर्गवृत्तनिरोधवान् ।
भित्वा द्वारं लंघयन् वा रिपूनुत्पाटयेद् बलात् ॥९२॥
दुराक्रम्यं रिपोर्दुर्गं यदि स्याद् दृढबन्धनैः ।
दुर्गपार्श्वं समाश्रित्य तिष्ठेद्राजा ससैनिकः ॥ ९३ ॥
येन तत्र वहिःस्थानां प्रवेशो नैव जायते ।
न वहिर्यान्ति तत्रस्थास्तथाकार्य्यं प्रयत्नतः ॥ ९४ ॥
एवं क्रमेण तत्रस्था हीनान्ना हीनविक्रमाः ।
स्वयं नश्यन्ति निर्वीर्य्याः शरणं यान्ति वा क्रमात् ९५
अरण्ये पर्व्वते वापि मरौ वा दुरतिक्रमे ।
एवं नीतिरुपादेया द्विषतामभिमर्द्दने ॥ ९६ ॥
यावत् ससैन्या रिपवस्तिष्ठन्त्यपि पलायिताः ।
तावन्निष्कण्टकं विद्यान्न राज्यं पृथिवीपतिः ॥ ९७ ॥

संग्रामान्तकार्य्यम् ।

तस्माज्जित्वा रिपुं कुर्य्याद्धतास्त्रं हतसैनिकम् ।
रुन्ध्याद्वा स्थापयेद्राज्ये बलाबलविलोकनात् ॥ १ ॥
कर्त्तुं समर्थः कालेन यः पुनर्लोकसंग्रहम् ।
रिपुसम्मेलनं वापि तं रुन्ध्याद्धीनमप्यरिम् ॥ २ ॥
यो जितः शरणं यातो दीनवृत्तिर्निराश्रयः ।
पुनस्तं स्थापयेद्राज्ये स्वजनैरभिरक्षितम् ॥ ३ ॥
जितोऽपि यो दुराचारो दुश्चेष्टो दुर्म्मदः सदा ।
रुद्धोऽपि रक्षकद्रोही तं हन्याद्वा प्रवासयेत् ॥ ४ ॥

धार्म्मिकं स्वहितं धीरं क्वचिद्राज्ये निवेशयेत् ।
स लोकान् वशयेत् प्रीत्या बोधयेच्च हिताहितम् ॥५॥
एवं जित्वा रिपुं राजा तद्राज्ये धनसंग्रही ।
तत्प्रजाः पालयेद् यत्नात् स्वप्रजा इव नीतितः ॥६॥
अथवा निजकार्य्याणां साधकं स्वमतानुगम् ।
संस्थापयेद् वीर्य्यवन्तं रिपुराज्ये विशारदम् ॥ ७ ॥
हृतं रिपुधनं राजा न स्वयं भोक्तुमर्हति ।
विभज्य सर्वसैन्येषु योजयेद् भागयोगतः ॥ ८ ॥
मृतानां समरक्षेत्रे पुत्रापत्यसुहृज्जनान् ।
पालयेत् शिक्षयेत् प्रीत्या तोषयेन्मतिमान् नृपः ॥९॥
शिक्षितानां यथाज्ञानं कार्य्ये संयोजयेत् ततः ।
वृद्धानां कर्म्महीनानां तथा सम्पालनं चरेत् ॥ १० ॥
स्वदुर्गे नगरे ग्रामे सर्वत्रोत्सवमाचरेत् ।
राजसूयादियज्ञेन देवान् सम्पूजयन्नृपः ॥ ११ ॥
दद्यादन्नं दरिद्राय योद्धृभ्यो मानजीविकाः ।
देवेभ्यो भूमिरत्नादि सर्वमेतत् शुभावहम् ॥ १२ ॥
स्वजनेन रिपुं रक्षेद् दानमानादिना नृपः ।
हृतराज्योऽपि भूपो न दीनवद्वृत्तिमर्हति ॥ १३ ॥
दशानां पालको योऽभूत् कथं भिक्षां लभेत सः ।
चिरशर्म्मोचितो यो वा कथं दुःखेन जीवति ॥ १४ ॥

न जानाति क्रियामन्यां लोकानां पालनं विना ।
कथं जीवेद्वती राज्ये यद्यसौ नैव पाल्यते ॥ १५ ॥
प्रजानां पालको राजा धर्म्मात् सोऽपि प्रजा तदा ।
नीतिमान् धार्म्मिको भूपः कथं तं नैव पालयेत्॥१६॥
बलात्कारहृतश्रीकः स्वार्थाद्वा दोषतो रिपुः ।
नैवं दोषस्तस्य कश्चिद् विनान्नं येन नश्यति ॥ १७ ॥
न हरेत् स्त्रियमेतस्य न तस्या धनमाहरेत् ।
अबला किं विजानाति चापरं सुखजीवना ॥ १८ ॥
दुःखे दुःखं सुखे शर्म्म या पत्युर्भजते परम् ।
सुखोचिता च या नित्यं कोऽवमन्येत तां स्त्रियम्१९
पूजिता यत्र तुष्यन्ति योषितो गृहदेवताः ।
देवतास्तत्र तुष्यन्ति कमला निश्चला चिरम् ॥ २० ॥
यत्र ता वेदनाग्रस्ता निःश्वसन्ति लवादपि ।
चञ्चला कमला तत्र विपदश्च पदे पदे ॥ २१ ॥
देवतासेवनं रक्ष्यं यथापूर्व्वं प्रयत्नतः ।
देवतास्वामिकं वस्तु न कश्चित् प्राप्तुमर्हति ॥ २२ ॥
दासभृत्यै धर्मकृत्यै तोषाद्यैर्वा यदर्पितम् ।
न तस्य हरणं कुर्य्यात् पूर्ववत् परिपालयेत् ॥ २३ ॥
यो यदा लभते यद्वै स्वाम्यं तस्य तदानघम् ।
स्वामिना दत्तवस्तूनि कोऽन्यथा कर्त्तुमर्हति ॥ २४ ॥

चञ्चलेयं सदा पृथ्वी नैकभोग्या चिरन्तनम् ।
स्वकराद् भ्रश्यमानायामन्योऽप्येवं विधास्यति ॥ २५ ॥
एवं विचिन्त्य धर्म्मात्मा न्यायाद्राज्यं प्रपालयन् ।
इह कीर्त्तिं समासाद्य परत्र लभते सुखम् ॥ २६ ॥
आरण्याः पार्वता ज्ञेया विपत्तौ बान्धवोत्तमाः ।
तस्मात्तेषां सदा कार्य्यं प्रीत्या पालनमुत्तमम् ॥२७॥
प्रत्यागमपथे पूर्वं स्थापयेद् भूविलादिषु ।
विषाग्निजननं तीक्ष्णं द्रव्यमन्येन दुश्चरम् ॥ २८ ॥
अन्याक्रमे स्वाक्रमे वा न जयो निश्चितः क्वचित् ।
तस्माद् युद्धसमारम्भे पदमेवं विलोकयेत् ॥ २९ ॥
सर्वशष्यसमायुक्तं गिरिदुर्गादिवेष्टितम् ।
यत्रस्थितानि सैन्यानि जीवन्ति निरुपद्रवम् ॥ ३० ॥
तत्र स्थित्वा पुनर्वीर्य्यप्रदीप्तस्तत्त्वकोविदः ।
पुनरप्याक्रमेत् शत्रून् जितोऽपि पृथिवीपतिः ॥ ३१ ॥
यद्याक्रमासमर्थः स्यात् सदा विघ्नं समाचरेत् ।
येन सन्त्रासितः शत्रुर्न क्षणं सुखमाविशेत् ॥ ३२ ॥
अन्याक्रमणकाले च पुरा मार्गं निरोधयेत् ।
मार्गरोधो महानीतिर्विमार्गः को हि गच्छति ॥३३॥
विच्छिद्य पुलिनं मार्गे विनाश्यान्नादिसम्पदम् ।
निष्काश्य मानवांस्तस्मात् पानीये विषमर्पयन् ॥३४॥

नौकाशकटयानादि विलोप्य वसुधाधिपः ।
विमुखोऽपि रिपुं हन्तुं समर्थः स्यात् सुनीतिमान्॥३५॥
रिपूणामाक्रमश्चेत् स्याद् दुर्निवार्य्यो भवेत् पुनः ।
दुर्गाश्रयो न कर्त्तव्यः पुनः कल्याणमिच्छता ॥ ३६ ॥
दुर्गाश्रये पार्श्वतश्चेत् सन्तिष्टेदरिमण्डलम् ।
चिरमाक्रम्य तन्नश्येत् स्वयमेव विनादनम् ॥ ३७ ॥
चेदाश्रयेत्तदा पार्श्वं पश्येत् प्रास्थानिकं नृपः ।
विपत्तौ येन निर्गच्छेदनाक्रान्तो ह्यनाहतः ॥ ३८ ॥
आश्रित्य वीर्य्यसंयोगादुपद्रुत्य रिपून् महत् ।
भूयाच्चेद् विफलायासः सधनो निस्सरेत्ततः ॥ ३९ ॥
निर्गम्यारण्यमाश्रित्य वन्यान् संगृह्य यत्नतः ।
पुनरुद्दीपयेद् वैरं येन शत्रुर्विनश्यति ॥ ४० ॥
अथवाक्रमणे शत्रोर्धरणीमण्डलं श्रयेत् ।
सहायैरश्वसञ्चारै र्यदीच्छेत् शुभमात्मनः ॥ ४१ ॥
अनन्ता धरणीह्येषा वनगिर्य्यादिवेष्टिता ।
न्यायतश्चरतः कः स्यादाक्रमे चम एव हि ॥ ४२ ॥
निष्क्रम्य मेलयन् भूपान् वीर्य्यमैत्रैस्कुलैर्नृपः ।
रिपुमुद्वे जयेन्नित्यं नैकत्र स्थितिमाचरेत् ॥ ४३ ॥
एवं भ्रमन् धरामध्ये विद्रुत्य रिपुमण्डलम् ।
स्वा[illegible]राज्योऽपि लभते राजलक्ष्मीं पुनर्नृपः ॥ ४४ ॥

सदा विरोधिनं कश्चिन्न प्रराभवितुं क्षमः ।
जितोऽपि सततं कुर्य्याद् विरोधं साहसाश्रितः ॥४५॥
अथवा द्विषतां शत्रुः श्रयणीयः स्वबान्धवैः ।
तेन सम्पाद्य साहाय्यं पातनीयो रिपुः क्रमात् ॥४६॥
एवं यथा यथानिष्टं रिपोरीक्षेत भूमिपः ।
तथा तथा विधातव्यं निस्तन्द्रेण महीभृता ॥ ४७ ॥

प्रतिष्ठादानम् ।

देवं वा मनुजं ग्रामं नगरं पर्वतं वनम् ।
अभिगम्य समृद्धाढ्य उचिताचारशोभितः ॥ १ ॥
दिने मासिऽथवा वर्षे वर्षान्ते वा क्रियाविधौ ।
पूजयित्वा सदालापैः स्थित्या सम्वर्द्धयेन्नृपः ॥ २ ॥
क्रियास्वितासु बहुलां सम्पदं लभते नृपः ।
लोकानुरागः सम्प्राप्तिरुभयोर्जीविजीव्ययोः ॥ ३ ॥
यथा भक्तिर्नरेन्द्रस्य तथात्र सम्पदुद्भवः ।
नास्त्येवं कृतिरत्नत्या या न सिद्धिर्नृपाश्रयात् ॥ ४ ॥
सर्वेषां स्थापको राजा सर्वेषां परिवर्द्धकः ।
सर्वेषां नाशकश्चैव राजा लोके महेश्वरः ॥ ५ ॥
कार्य्यातिपाते प्रीतेर्वा विवृद्धिपरिकामुकः ।
कुमारमप्यमात्यं वा भृत्यं वा प्रेरयेन्मतम् ॥ ६ ॥

प्रेरणविधिः ।

सम्भाव्यमानव्यापत्तौ महत्यामात्मसम्मितान् ।
प्रसिद्धान् कार्य्यकुशलान् कूटाद् यत्नेन चालयेत् ॥१॥

त्यागे रौद्रैर्वणिग्वृत्त्या निपुणान् प्रेष्य भूमिपः।
अन्येषां तत्त्वमन्विच्छेद् भेददानादिलिप्सया ॥ २ ॥
दारापत्यहितादीनां ये समर्था निकृन्तने ।
ते समर्थाः परोद्भेदे भवन्ति कृतबुद्धयः ॥ ३ ॥
यथैको लोकते पापं तथान्यः किं न लोकयेत् ।
तस्मात् क्रिया बहुमूला भवन्ति चारभेदिनः ॥ ४ ॥
नियुक्तैः सततं कार्य्यमात्मव्यापत्तिकल्पनम् ।
येन शत्रुकुलं विद्याद् विपन्नं स्वामिविच्युतम ॥ ५ ॥
एवं कार्य्येषु युक्तानां सदा कूटनिवेविणाम् ।
काले सिध्यन्ति कार्य्याणि बहुयत्नेन धीमताम् ॥ ६ ॥
सविशेषविधानस्य ते जानन्ति य उद्यताः ।
कठिनोऽयं राजमार्गो लोकनीयः प्रयत्नतः ॥ ७ ॥
कियदात्मीयवृत्तीनामुद्भवे राजसम्पदः ।
भोक्तारो ये विजानन्ति ते नान्ये पार्श्वगामिनः ॥ ८ ॥
उक्तिरेका क्रियाप्येका फलमन्यदुदीच्यते ।
अत्रैव प्रकृतिर्देवी प्रायः पूर्णकलेवरा ॥ ९ ॥

भोगविधिः

न भोगादधिकं किञ्चित् संसारे विद्यते नृणाम् ।
तस्माद् यत्नेन भुञ्जीत विषयान् वसुधापतिः ॥ १ ॥
यदि भोगं न कुर्व्वीत किं राज्येन भवेत् तदा ।
यदर्थं शिरसश्छेदः सम्भाव्योऽस्ति पदे पदे ॥ २ ॥

रसरूपगन्धशब्दस्पर्शाः सुभोगसाधकाः ।
तस्मादेतान् प्रयत्नेन भुञ्जीत सुसमाहितः ॥ ३ ॥

मधुरादिरसभोगः ।

मधुराम्लकषायादिरसा ये सुधरातले ।
पाकयोगादिभिर्नित्यं सेवेत समयोचितम् ॥ १ ॥
रसानामभियोगेन वायुपित्तकफादयः ।
ह्रासवृद्धिसमावस्था भजन्ते यत् शरीरिणाम् ॥ २ ॥
तस्माद्भिषग्वरादेशाद् योगिनास्वानि देशतः ।
कालं विभज्य भुञ्जीत रसान् करणपोषकान् ॥ ३ ॥
असम्यग्रससम्भोगाद्विगुणा धातवो नृणाम् ।
उत्पादयन्ति दुःखानि रोगचिन्तादिभिः सदा ॥ ४ ॥

रूपभोगः ।

जड़जङ्गमयोर्मध्ये दृश्यं यत् स्यादनुत्तमम् ।
तत्सर्व्वं सततं पश्येद् यथाकालं यथोदितम् ॥ १ ॥
नदीपर्व्वतकान्तारक्षेत्रारामगृहादिषु ।
दासमित्रवधूदासीपशुयानखगादिषु ॥ २ ॥
वीरे भयङ्करी मूर्त्तिर्मधुरा सुरतोत्सवे ।
वात्सल्ये वत्सला ज्ञेया हास्ये हास्यमयी तथा ॥ ३ ॥
एवं रूपेण लोकेषु यत्स्याद् यद्रससाधनम् ।
शृङ्गारादिषु तत्सर्व्वं पश्येद्रूपं विभागतः ॥ ४ ॥

गन्धभोगः ।

स्वाभाविकं कृत्रिमञ्च रोचकं मोदकं तथा ।
मादकं वर्द्धकं स्निग्धं निद्रालस्यकरं तथा ॥ १ ॥
गन्धं सेवेत सततं भक्ष्ये पेये च वाससि ।
येनात्मप्रीतिलाभः स्यात् सगन्धः शुभदो मतः ॥ २ ॥

शब्दभोगः ।

ध्वनिवर्णविभेदेन शब्दस्तु द्विविधो मतः ।
ध्वनिः पतङ्गे वाद्ये च यन्त्रे चास्पष्टरूपभाक् ॥ १ ॥
स्पष्टशब्दो भवेद्वर्णो यः कण्ठे वर्त्तते नृणाम् ।
रागभावादियोगेन नानाप्रीतिकरः सदा ॥ २ ॥

स्पर्शभोगः ।

पुष्पग्राव कोमलाङ्गी शय्यावातासनादिषु ।
सेवनीयः सदास्पर्शः कालयोगानुसारतः ॥ १ ॥
यावद् यच्च यदाभोग्यं शब्दादिषु महीभृता ।
तावत् सौन्दर्य्ययोगेन साधनीयं प्रयत्नतः ॥ २ ॥

वैधकामभोगः ।

धर्म्मार्थौ साधयन् काले तेषुतेष्वधिकारिभिः ।
धर्म्मे पुरोधो विद्वांसौ दण्डिनो ब्रह्मचारिणः ॥ १ ॥
अर्थे सुचतुरा नीतौ निपुणा बहुकारिणः ।
दण्डे तीक्ष्णा न्यायरता रणेक्रूरामदोद्धताः ॥ २ ॥

निश्चिन्तोऽमात्यसंयुक्तो निशिकामान् समाचरेत् ।
वेशालङ्कारसंयुक्तः प्रसन्नः सौरभान्वितः ॥ ३ ॥
उद्याने पर्व्वतेऽरण्ये तरण्यां मन्दिरे तथा ।
समरूपधरैर्मित्रैर्विटचेटविदूषकैः ॥ ४ ॥
पुष्पैः परिमलै रत्नैः काव्यैः सङ्गीतसेवनैः ।
यन्त्रैर्हास्यरसैर्द्यूतैः पानभोजनसम्भ्रमैः ॥ ५ ॥
तरुणीगणनृत्येन पतङ्गमधुरस्वनैः ।
एकान्तेऽहर्निशं यावद् भोगं कुर्य्यादनातुरः ॥ ६ ॥
ततोद्दीप्तमना भूत्वा रहः सेवेत भूमिपः ।
अमात्यानादरात्त्यक्त्वा प्रियबन्धुसमन्वितः ॥ ७ ॥
यो धर्म्मिष्ठः कलाभिज्ञो विश्वस्तश्चात्मवत् सुधीः ।
शुद्धान्तचारी तेन स्यादथवा स्वयमेव हि ॥ ८ ॥
विदूषकेण शुद्धान्तसम्भोगः श्रूयते यतः ।
तेन तत्सहयोगो हि न दोषाय महीभृताम् ॥ ९ ॥
न सहायमृते किञ्चित् कार्य्यं सिध्यति भूभृताम् ।
तस्मात् तत्र क्रियासिद्ध्यै सहायमनुसञ्चरेत् ॥ १० ॥
माने भेदादिकोपायः साधनीयो हि योषिताम् ।
स्त्रियः स्त्रीणां सहायाः स्युः पुरुषाः पुरुषस्य च ॥ ११ ॥
वात्स्यायनोक्तमार्गेण भरताभिहितेन च ।
केलिकौतुकनृत्यादियोगेन रमयेद्वधूः । १२ ॥

सेव्यासेव्यस्त्रीलक्षणम् ।

नवयस्यधिकां तुल्यां दुर्लक्षणसमन्विताम् ।
हीनाङ्गीमधिकाङ्गीञ्च रुग्नां नैव भजेन्नृपः ॥ १ ॥
प्रसन्ना रागसंयुक्ता सद्वंशप्रभवा तथा ।
रूपयौवनसम्पन्ना लावण्यपरिभूषिता ॥ २ ॥
क्षीणाङ्गी लक्षणयुता केलिकौतुककोविदा ।
सा तु सेव्या वधूराज्ञा वैधकाले यथाबलम् ॥ ३ ॥

सुरतव्यवस्था ।

अतिमैथुनसक्तस्य नानारोगः प्रजायते ।
अकालमृत्युश्च यतस्तस्मात्तत् परिवर्ज्जयेत् ॥ १ ॥
आसनं बन्धनं विद्यादौषधं न्यसनं तथा ।
येन प्रीतिः समैव स्यादुभयोरपि रक्तयोः ॥ २ ॥
त्रिभिस्त्रिभिरहोभिर्हि समीपात्प्रमदां नरः ।
सर्व्वेष्वृतुषु घर्म्मेतु पक्षात्पक्षाद्भजेद्बुधः ॥ ३ ॥
प्रत्यूषे चार्द्धरात्रे च मध्यान्हे वर्ज्जयेद्रतिम् ।
तथा रुग्नः श्रमैर्युक्तो भुक्तो वा क्षुधयार्द्दितः ॥ ४ ॥
रतिं कृत्वा पयः पीत्वा घृतादिपरिमीलितम् ।
सुखशय्यासमासीनः सेवेत व्यजनानिलम् ॥ ५ ॥
सुरतान्ते स्निग्धयोगः कफादिपरिपोषकः ।
तस्मादिमं न सेवेत न जलं शीतलं पिबेत् ॥ ६ ॥

भ्रमणविधिः ।

कालं विभज्य नृपतिश्चरेद्देशान् शनैः शनैः ।
यथर्त्तुसुखमालोक्य यथाशस्त्राभियोगतः ॥ १ ॥
शरत्काले नदीतीरे चैत्रे च मधुमासके ।
अरण्ये मृगयामिच्छन् चरेद् ग्रीष्मे हिमप्लुते ॥ २ ॥
ह्रासोन्नती स्वयंपश्येद् दुर्भिक्षमाकरस्य च ।
रत्नानाञ्च पशूनाञ्च प्रस्तराणां महीरुहाम् ॥ ३ ॥
यथायोगं करं गृह्णन् पश्यन् वृत्तिं निदेशिनाम् ।
प्रजानामान्तरं तत्त्वं विजानीयात् समाहितः ॥ ४ ॥
सामन्तादीन् समामन्त्र्य दानैर्मानैः सुभाषणैः ।
उत्सवैस्तोषयन् सर्व्वान् वशे कुर्य्यान्महीपतिः ॥ ५ ॥
समरे तु समारब्धे न स्वयं गन्तुमर्हति ।
अमात्यमात्मवत् प्रेष्य ज्ञाततत्त्वश्चरेत्क्रियाम् ॥ ६ ॥
भ्रमतो निजराज्येषुप्रजातुष्टिर्धनागमः ।
बलौन्नत्यं स्वास्थ्यलाभः खलह्रासः पदे पदे ॥ ७ ॥
एकत्रालस्यपूर्णस्य तिष्ठतो व्यसने रतिः ।
दुष्टानामभिसम्वृद्धिः प्रजानां दुःखमेव च ॥ ८ ॥

शरीररक्षोपायः ।

गीयन्तेसर्व्वकर्म्माणि देहमूलानि देहिनाम् ।
देहरक्षाकरी नीतिः कथ्यते तेन साम्प्रतम् ॥ १ ॥
ब्राह्मे मुहूर्त्ते उत्थाय कृतदेवगुरुस्थितिः ।
स्वकार्य्यमनुसन्दध्यात् किम्वा देवे क्षिपेत् क्रियाम् ॥ २ ॥

विश्रम्य स्वेदनिर्मुक्तो विदध्यादनुलेपनम् ।
धातूनामनुरूपेण द्रव्येण परिमीलितम् ॥ २३ ॥
सुखालेपाद् दृढ़ं चक्षुः पीनगण्डं तथाननम् ।
अव्यङ्गपीड़कं कान्तं भवत्यम्बुजसन्निभम् ॥ २४ ॥
पक्ष्मलं विशदं कान्तममलोज्ज्वलतारकम् ।
नेत्रमञ्जनसंयोगाद् भवेच्च चिरदर्शकम् ॥ २५ ॥
दोषघ्नमथचौजस्यं सौभाग्यकरमुत्तमम् ।
सुमनोऽम्बररत्नानां कुर्य्याद् धारणमादरात् ॥ २६ ॥
वायोरग्नेः समुत्पादे स्नेहाप्यायनकारिभिः ।
सद्योजातपयोमुख्यै र्धातुयोग्यौषधादिभिः ॥ २७ ॥
कृतक्रियं श्रान्तियुक्तं पूरयेद् देहयन्त्रकम् ।
येन स्निग्धं सुलब्धान्नं चारयेत् स्वपदे पुनः ॥ २८ ॥
काश्मीरभूवंशसारशुण्ठिकौनसदादिकम् ।
धनक्षौद्रादिकं नाना स्यादौषधमनुत्तमम् ॥ २९ ॥
तस्माज्जले समुद्भूते पिवेत् पानीयमुत्तमम् ।
स्वर्णदाहादिसंशुद्धं निरापत्तिप्रदोद्भवम् ॥ ३० ॥
गुग्गुलादिधूपधूमै र्धूपितेऽभिनवे मृदाम् ।
पात्रे पवनसञ्चारैः शीतं वस्त्रादिशोधितम् ॥ ३१ ॥
चुलुकैर्वामृदां पात्रै र्धातुजैर्हेमसम्भवैः ।
यथालाभं पिवेद् वारि सर्वमेतदनुत्तमम् ॥ ३२ ॥

तदग्नियोगसन्तप्तं कालादन्नं सुपोषितम् ।
जलयोगेन प्रक्लिद्य रसमुत्पादयेत् ततः ॥ ३३ ॥
जलात् पृथ्वीसमुत्पादे सुष्टुतल्पोपरिस्थितः ।
सुखं तिष्ठेद् येन यन्त्रं स्निग्धं स्याद्रसपूरणैः ॥ ३४ ॥
स्निग्धे यन्त्रे वाद्यरसे पुनराकाशसम्भवे ।
समर्थश्चेत् पुनस्तैलैः स्नानं कुर्य्यादनातुरः ॥ ३५ ॥
तैलं स्यात् सार्षपञ्चापि तैलं वा पुष्पगन्धितम् ।
घृतादष्टगुणं तैलं मर्दनान्न च भक्षणात् ॥ ३६ ॥
पुनर्वायौ समुत्पन्ने प्राणायामं चरेत् सुधीः ।
तदन्ते भोजनं कुर्य्याद् रसवीर्य्यविवर्द्धकैः ॥ ३७ ॥
भिषग्वरादेशरतः स्वयम्वा वीक्ष्य तत्त्वतः ।
समयोचितयोगेन भुक्तिं कुर्य्यादनातुरः ॥ ३८ ॥
एवं क्रमेण तत्त्वानां समुत्पाते दिवानिशम् ।
स्नानपानादिकं कुर्य्यात् परमक्षेमकामुकः ॥ ३९ ॥
दिवारात्रिसमे काले घटिके द्वे क्रमात् क्रमात् ।
आकाशपवमानाग्निजलभूमिसमुद्भवः ॥ ४० ॥
पुनरस्मिन् रजश्चैव तमः सत्त्वं प्रजायते ।
पञ्चपञ्चात्मको दण्डः कालो ह्येषां क्रमोदये ॥ ४१ ॥
रजस्यौग्रं प्रकुर्व्वीत तमसि स्थितिमाचरेत् ।
सत्त्वे मोदकरं कार्य्यं दिवारात्रं यथास्थितम् ॥ ४२ ॥

पुनरप्यत्र देहेषु दिवारात्रविभागतः ।
चन्द्रसूर्य्यादिसञ्चारी नासावायुप्रचारतः ॥ ४३ ॥
चन्द्रे स्नेहकरं द्रव्यं सूर्य्ये तेजस्करं तथा ।
सङ्गमे ध्यानचिन्तादि कुर्य्याद् योगिनिदेशतः ॥ ४४ ॥
यात्रायां शीतकिरणे प्रीतिवश्यकरी क्रिया ।
सूर्य्ये तीक्ष्णं प्रकुर्व्वीत तथा मैथुनमेव च ॥ ४५ ॥
कालयोगेन प्रीत्यादेर्ह्रासवृद्ध्यादिकं भवेत् ।
तस्मात् तदानुकूल्येन द्रव्यभुक्तिः प्रशस्यते ॥ ४६ ॥
वर्षा शरच्च हेमन्तः शिशिरो मधुतापकौ ।
अस्मिन् तन्त्रे षड़्तवो ज्ञेया वार्षादिवर्द्धकाः ॥४७॥
भाद्रादिमासयुग्मेषु द्वौ द्वौ मासावृतुर्भवेत् ।
स्वभावाद् वायुपित्तादेर्ह्रासवृद्ध्यादिकं ततः ॥ ४८ ॥
वर्षासु तरुणं द्रव्यमल्पवीर्य्यं तथा पयः ।
जलप्राया च धरणी नभो वारिधराकुलम् ॥ ४९ ॥
स्निग्धदेहस्य जीवस्य शीतवाताभियोगतः ।
विनष्टाग्नेर्विदग्धान्नं पित्तसञ्चयकारकम् ॥ ५० ॥
स स्वल्पमेव शरदि व्योम्नि पङ्के प्रशुष्यति ।
सूर्य्योत्तापसमायुक्तः पैत्तिकीं जनयेद् रुजम् ॥ ५१ ॥
तद्द्रव्यं कालपाकेन हेमन्ते वीर्य्यसंयुतम् ।
जलं स्निग्धं प्रसन्नं च गुरु मन्दकरो रविः ॥ ५२ ॥

पवनैः स्तब्धदेहानां सतुषारैः शरीरिणाम् ।
अविदग्धं तदन्नं सत् स्नेहगौरवशैत्यतः ॥ ५३ ॥
उपलेपाच्च जनयेत् श्लेष्मणां सञ्चयं पुनः ।
स सञ्चयो वसन्तेषु सूर्य्यरश्मिसमावृतः ॥ ५४ ॥
स्तब्धदेहस्य जीवस्य श्लैष्मिकीं जनयेद् रुजम् ।
तन्निदाघे रूक्षलघुनिःसारं सलिलं तथा ॥ ५५ ॥
तापोपशुष्कदेहानां वैशद्याद्रौक्षलाघवात् ।
जनयेत् पवमानस्य सञ्चयं सेवितं पुनः ॥ ५६ ॥
स सञ्चयः प्रावृषि च जलक्लिन्ने धरातले ।
क्लिन्नदेहस्य वाताद्यैर्वातिकीं जनयेद् रुजम् ॥ ५७ ॥
वर्षाहिमन्तघर्म्मेषु दोषस्य सञ्चितस्य च ।
शरद्वसन्तप्रावृट्सु रुष्टस्य च निवर्हणम् ॥ ५८ ॥
प्रत्यहं चैव विज्ञेयं मधोः पूर्व्वान्हे एव च ।
मध्यान्हे ग्रीष्मकालस्य अपरान्हे च प्रावृषः ॥ ५९ ॥
प्रदोषे वार्षिकं लिङ्गमर्द्धरात्रे च शारदम् ।
प्रत्यूषः समये चैव ज्ञेयं हैमन्तकं बुधैः ॥ ६० ॥
अव्यापन्नेषु ऋतुषु द्रव्यं व्यापत्तिवर्ज्जितम् ।
व्यापन्नेष्वन्यथैव स्याद् यथा सुश्रुतभाषितम् ॥ ६१ ॥

अव्यापन्नर्त्तुलक्षणानि ।

तत्र हेमन्तस्य ।

वायुर्वात्युत्तरः शीतो रजोधूमाकुला दिशः ।
छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः ॥ १ ॥
दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः ।
रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये ॥ २ ॥

शिशिरस्य ।

शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः ।
शेषं हेमन्तवत् सर्व्वं विज्ञेयं लक्षणं बुधैः ॥ १ ॥

वसन्तस्य ।

दिशो वसन्ते विमलाः काननैरुपशोभिताः ।
किंशुकाम्भोजवकुलचूताशोकादि पुष्पितैः ॥ १ ॥
कोकिलाषट्पदगणैरुपगीता मनोहराः ।
दक्षिणानिलसम्वीताः सुसुखाः पल्लवोज्ज्वलाः ॥ २ ॥

ग्रीष्मस्य ।

ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः ।
भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्ज्वलिता इव ॥ १ ॥
भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः ।
ध्वस्तवीरुत्तृणलता विपर्णाङ्घ्रिनपादपाः ॥ २ ॥

प्रावृषः ।

प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः ।
अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः ॥ १ ॥

कोमलश्यामशष्पाढ्या शक्रगोपोज्ज्वला मही ।
कदम्बनीपकुटजसर्ज्जकेतकिभूषिता ॥ २ ॥
तत्र वर्षासु नद्यम्भःपूरोद्भग्नतटद्रुमाः ।
वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः ॥ ३ ॥
भूरव्यक्तस्थलश्वभ्रा बहुशष्पोपशोभिता ।
नातिगर्ज्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ ४ ॥

शरद् ।

बभ्रुरुक्षाः शरद्यर्कः श्वेताभ्रविमलं नभः ।
तथा सरांस्यम्बुरुहैर्भान्तिहंसांसघट्टितैः ॥ १ ॥
पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषुभूः ।
बाणसप्ताह्वबन्धूककाशासनविराजिता ॥ २ ॥

ऋतुविपर्य्यासादिकर्त्तव्यम् ।

स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः ।
विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥ १ ॥
हरेद् वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् ।
वर्षासु शमयेद् वायुं प्रागविकारसमुच्छ्रयात् ॥ २ ॥
यस्मिन् यस्मिन्नृतौ ये ये दोषाः कुप्यन्ति देहिनाम् ।
तेषु तेषु सेवनीया रसास्तेषु विजानता ॥ ३ ॥
वर्षासु न पिबेत्तोयं पिबेत् शरदि मात्रया ।
वर्षासु चतुरो मासान् मात्रावदुदकं पिबेत् ॥ ४ ॥

उष्णं हैमे वसन्ते च कामं ग्रीष्मे तु शीतलम् ।
हेमन्ते च वसन्ते च सौध्वरिष्टौ पिबेन्नरः ॥ ५ ॥
गृहशीतं पिबेद् ग्रीष्मे प्रावृट्काले रसं पिबेत् ।
यूषं वर्षति तस्यान्ते प्रपिबेच्छीतलं जलम् ॥ ६ ॥
स्वस्थ एवमतोऽन्यस्तु दोषाहारमतानुगः ।
स्नेहं सैन्धवचूर्णेन पिप्पलीभिश्च संयुतम् ॥ ७ ॥
पिबेदग्निविवृद्ध्यर्थं नच वेगान् विधारयेत् ।
अग्निदीप्तिकरं नृणां रोगाणां शमनं प्रति ॥ ८ ॥
प्रावृट्शरद्वसन्तेषु सम्यक् स्नेहादिमाचरेत् ।
कफे प्रच्छर्द्दनं पित्ते विरेको वस्तिरीरणे ॥ ९ ॥
शष्यते त्रिष्वपि सदा व्यायामो दोषनाशनः ।
प्रवातं रौच्यवैवर्ण्यस्तम्भकृद् दाहपक्तिनुत् ॥ १० ॥
स्वेदमूर्च्छापिपासाघ्नमप्रवातमतोऽन्यथा ।
सुखं वातं प्रसेवेत ग्रीष्मे शरदि मानवः ॥ ११ ॥
निवातं ह्यायुषे सेव्यमारोग्याय च सर्व्वदा ।
आतपः पित्ततृष्णाग्निस्वेदमूर्च्छाभ्रमास्रकृत् ॥ १२ ॥
दाहवैवर्ण्यकारी च छाया चैतानपोहति ।
विपर्य्यासाविपर्य्यासादृतूनां लोककर्म्मजौ ॥ १३ ॥
विपर्य्यासे महारोगो मरको वा भवेत् पुनः ।
पूजा होमस्तपो यज्ञः शान्त्यर्थं शिष्टभोजनम् ॥
स्वच्छदेशोद्भवं द्रव्यं सेव्यं वा स्थानमुत्सृजेत् ॥१४॥

विषवल्ल्याऽऽदियोगेन कृत्यादेर्वाभियोगतः ।
स्थानत्यागोऽथवा शान्तिर्विधेया पूर्व्ववत् सता ॥ १५ ॥
दुष्टवारिगतद्रव्यपूतिगन्धादियोगजाः ।
रुजस्त्यागेन नाशेन शमनीयाः प्रयत्नतः ॥ १६ ॥
एवं यथायथोत्पातं पश्येदात्मनि वा जने ।
तैस्तैर्मन्त्रिभिरुत्साही शमयँल्लभते सुखम् ॥ १७ ॥

महाराज्यम् ।

यावदस्ति नृणां कार्य्यं धर्म्माद्वा व्यवहारतः ।
तत् सर्व्वं स्थाप्यते राज्ञा यदि सर्व्वानुमोदतः ॥ १ ॥
दृष्टेऽनिष्टे सुखं दुःखं यदि कर्म्मानुरोधतः ।
भुञ्जानाः सकला लोका निर्विण्णाः स्युरुज्ज्वलाः ॥ २ ॥
नियमः सर्वसम्मत्या कल्पितः पाल्यते यदि ।
न कश्चित् स्वार्थमुद्दिश्य कर्त्तुमर्हेद् यथेप्सितम् ॥ ३ ॥
सर्व्वे नियममाश्रित्य कार्य्यं कुर्य्युर्निराकुलाः ।
न कश्चिद् द्वेषमागच्छेदुन्नतिं वीक्ष्य कस्यचित् ॥ ४ ॥
गुणवृद्धा ज्ञानवृद्धाश्चेज्जनैरनुमोदिताः ।
सर्वे निरलसाश्चेत् स्युः स्वाधिकारे दृढव्रताः ॥ ५ ॥
स्वकार्य्यमभिसम्वीक्ष्य सुखदुःखाविमोहिताः ।
स्वीयान्ने प्रीतिसम्पन्नाः स्वभूमौ वद्धमुष्टयः ॥ ६ ॥
राजा वा श्रोत्रियो वापि धनी वा दीन एव वा ।
कार्य्यानुरूपं दण्ड्यः स्यात् पूज्यो वा जनसंसदि ॥७॥

न कश्चित् कञ्चिदालोक्य विहसेत् प्रीतिमाचरेत् ।
लोकः कर्म्मानुसारेण चरेदुन्नतिमात्मनः ॥ ८ ॥
असमर्थाः जनैः पोष्याः समर्थाः शिक्षिताः क्रियाम् ।
न्याय्ये सर्व्वे राजकोषस्वामिनः स्युर्यथोचितम् ॥ ९ ॥
एवं साधरणीनीतिर्यत्रास्ते जनमण्डले ।
मरुर्व्वोषरभूमिर्वा भवेद् रत्नमयी क्षणात् ॥ १० ॥
चिरं तिष्ठति साम्राज्यं सुखराशिः पदे पदे ।
रिपवः संक्षयं यान्ति दुःखलेशो न दृश्यते ॥ ११ ॥

अनुन्नतिमार्गः ।

साहङ्कारा यत्र लोकाः स्वविज्ञातेषु सर्व्वदा ।
स्वानुभूतपरामात्याः स्वोत्कर्षेष्वपि विद्विषः ॥ १ ॥
स्वानुभूतार्थसंरक्षाद्दृढवन्धा भयाकुलाः ।
यथातथाविधानेन स्वार्थलाभे निराकुलाः ॥ २ ॥
स्वजनानपि सम्पाल्य स्वार्थलाभे दृढव्रताः ।
विपत्तावात्मबन्धूनां सोत्साहा हतबान्धवाः ॥ ३ ॥
श्रमक्रमविधौ दीनाः पैत्रसम्पत्कृतेक्षणाः ।
सर्वेषां दोषसन्धाने सर्वदैव कृतश्रमाः ॥ ४ ॥
चिरसंस्कारसम्बद्धा हितेष्वपि निराग्रहाः ।
व्यर्थवाग्जालसम्पन्ना व्यर्थकालातिपातिनः ॥ ५ ॥
विनायासेन लब्धान्ना आत्मरक्षामहाव्रताः ।
तत्राचिरेण लोकानां महादुःखं प्रजायते ॥ ६ ॥

प्रायशो मनुजैर्यत्र लभ्यतेऽन्नं विना श्रमम् ।
एवं दुःखकरी वृत्तिर्जायते तत्र देहिनाम् ॥ ७ ॥

लोकवशीकारः ।

सर्व्वे देहभृतः प्राय आत्मबोधाभिमानिनः ।
नित्यं कल्याणमिच्छन्ति स्वविज्ञातेन हेतुना ॥ १ ॥
न कश्चिद् कस्यचिद्वाक्ये विश्वासं सहसाचरेत् ।
यतः स्वार्थपराः सर्वे स्वार्थसाधनतत्पराः ॥ २ ॥
तस्माद् यो बोधयोगेन लोकानामान्तरीं गतिम् ।
विज्ञाय युक्तियोगेन दुर्व्बोधशमने क्षमः ॥ ३ ॥
लब्धबोधान् सुखौन्नत्यं दर्शयन् स्वापहारकः ।
स लोकान् वशमानीय लभते वाञ्छितं पदम् ॥ ४ ॥
यावद्विषयसम्मोहस्तावदाभ्ध्यं शरीरिणाम् ।
आन्ध्यात् स्वेष्टपराभूतिः सन्तापयति मानवान् ॥ ५ ॥
आन्ध्यं विनाश्य यः पुंसामिष्टदः प्रीतिवर्द्धनः ।
कथं तस्य वशीभूतिं न गच्छेयुः सुखाशिनः ॥ ६ ॥
बान्धवाः सुखदातारो द्विष्टा दुःखस्य साधकाः ।
प्रीतिक्रोधमयी वृत्तिः स्वार्थास्वार्थभवा नृणाम् ॥ ७ ॥
तस्माद् यथायथोपायैर्यै भवन्ति ससम्पदः ।
देशं कालं क्रियां द्रव्यं वीर्य्यं बुद्धिं प्रियाप्रिये ॥ ८ ॥
विलोकयन् क्रमाल्लोकान् संयोजयति तादृशम् ।
सोऽचिरेणैव कालेन लोकानामधिपो भवेत् ॥ ९ ॥

यदा राजा क्षीणपुन्यः शठैर्मोहितमानसः ।
सदा भोगरतः स्वार्थजीवनो लोकदुःखदः ॥ १० ॥
तदैष परमो देवो लोककारुण्यचोदितः ।
उद्धाराय प्रतप्तानां गणैः सञ्चेष्टयेत् स्वयम् ॥ ११ ॥
यो लोकान् वशमानीय दत्त्वा क्षेममयीं मतिम् ।
नियमाच्चालयन् पृथ्वीं साधयेदिष्टवैभवम् ॥ १२ ॥
अतएव नरेशानः परो देवो गणैः सह ।
उदितः कुरुते कार्य्यं सर्व्वकल्याणसाधनम् ॥ १३ ॥
सदा तिष्ठत्यसौ देवः सदामुक्तः सनातनः ।
लोकभाग्यं विना कस्मात् क्रियां कुर्य्यान्निरामयः १४
सुखखद्योतिका यस्मिन् कालेऽपि विलयं चरेत् ।
दुःखराशिभिरुत्पीडा दह्यतेऽहर्निशं जनः ॥ १५ ॥
मृत्युकामान् जनान् वीक्ष्य निरालम्बान् कृपामयः ।
रक्षाहेतोः स्वसृष्टीनां चेष्टावान् भवति स्वयम् ॥१६॥
अथवा जातमात्राणां कार्य्याकार्य्यमजानताम् ।
उपदेशाय लोकानामेष देवः प्रकाशते ॥ १७ ॥
स एष परमो देव आदेष्टा लोकवर्त्मनाम् ।
नानारूपधरो भूत्वा स्वयं भुङ्क्ते फलं सदा ॥ १८ ॥

पक्षावलम्बनम् ।

वीरप्रियेयं धरणी वीराः संग्रामकामुकाः ।
तस्मात् क्षणं न तिष्ठेत्तु रणशून्या वसुन्धरा ॥ १ ॥

अन्येषामपि संग्रामे प्रवृत्ते वसुधाधिपः ।
न स्थैर्य्यं लभमानः स्यात् कार्य्याकार्य्ये परीक्षयेत्॥२॥
जये यस्य स्वहानिःस्याद् वाधयेत् तं स्वसैनिकैः ।
सुहृत्सम्बन्धिनो ह्येते नेति कार्य्या विचारणा ॥ ३ ॥
स्वसंग्रामादपि ह्ययं परयुद्धं भयङ्करम् ।
स्वस्थाने ज्ञायते तत्त्वं विधिस्तस्मात् सुसाधनः ॥४॥
परत्र दुर्म्मता लोकाः स्थानं यानं क्रियादिकम् ।
तत्र सम्बोधनं कर्त्तुं बहुयत्नेन शक्यते ॥ ५ ॥
अन्येषामपि संग्रामेष्वादौ सन्ध्यादिसाधनम् ।
अशक्ये तत्र कुर्व्वीत समरं स्वार्थसिद्धये ॥ ६ ॥

महासन्धिः ।

सहायवलसम्पन्ना ये नित्यं नीतिमार्गगाः ।
सम्राजो वा महाराजास्तेषां सन्धिरथोच्यते ॥ १ ॥
स्वस्वार्थमभिसन्धाय सर्व्वे सर्व्वार्थदर्शिनः ।
सर्व्वं संरक्षितुं नित्यं यतेरन् नियमाश्रिताः ॥ २ ॥
एकाभिभूतावन्येन सर्व्वेषां यदि रक्षणम् ।
न कश्चित् कस्यचिद्धर्त्तुं विषयं सहसा क्षमः ॥ ३ ॥
अन्यायसाधने क्रोधे विनष्टे सर्वयत्नतः ।
सर्वे भूत्वा निरापन्ना लभन्ते चिरसम्पदम् ॥ ४ ॥
एकापराधे सर्वैश्च बोधो दासः सुनीतितः ।
अवोधे दमनं कार्य्यं येनासौ नो तथा भवेत् ॥ ५ ॥

अथवा तत्र लोकाना मभिमत्या नृपान्तरम् ।
स्थापयेच्चेद्दुराचाराः सर्वे दम्या नृपैस्तदा ॥ ६ ॥
सर्वेषामभि सम्मत्या तत्र योज्यं नृपान्तरम् ।
रक्षणीयं प्रयत्नेन येन दुष्टा व्रजन्त्यधः ॥ ७ ॥
एकानिष्टे विजानीयुः सर्वे स्वानिष्टमात्मनः ।
किन्त्वेष कठिना सन्धिर्हठान्नोदेति भूभृताम् ॥ ८ ॥
सर्वे स्वोन्मादविभ्रान्ताः स्वाधिक्यकारिकामुका ।
कायेन मनसा वाचा यतन्ते निजसम्पदि ॥ ९ ॥
खिल एष महादेव्याः प्रकृतेर्वीरसंसदि ।
अतीत्य प्रकृतेर्लीलां कः स्वयं कर्त्तुमर्हति ॥ १० ॥
साधनीया प्रयत्नेन चिरमेषा न तिष्ठति ।
यावत् तिष्ठेत् सुखं तावद् यतनीयं ततो नृपैः ॥ ११ ॥
एवं यदि महासन्धिः पाल्यते नृप मण्डलैः ।
तदा स्वर्गादपि प्रीतिं लभन्ते सर्व्व मानवाः ॥ १२ ॥
यदि सर्वैर्न जायेत सन्धिरेष तदा नृपैः ।
स्वार्थसंसृष्टभूपैस्तु प्रीतिः कार्य्या सुबन्धनात् ॥ १३ ॥

मण्डलकर्त्तव्यम् ।

नियमात् स्थापिते मार्गे साम्राज्य व्यवहारतः ।
दानं वा पूजनं मानं यथाकालं प्रयोजयन् ॥ १ ॥
स्वाधिकारे समारूढचेतो निस्तन्द्रनिर्भयः ।
प्रजाक्षेमभरैः कार्य्यैर्वशयन्मधुरान्तरः ॥ २ ॥

धर्म्मं भोगं समागच्छ मित्रेण हितकारिणा ।
सूर्य्यानिलयमादित्वं भजबे मण्डलं सदा ॥ ३ ॥
चेद्धीशो महादेवस्तदा देवं स्वमण्डलम् ।
परस्परगुणासङ्गाद्दयया राजसम्पदः ॥ ४ ॥
चेदेकं साधुवृत्ति स्यादपरं दुष्टवृत्तिकम् ।
सम्राजस्तीव्रतायुक्ता तत्र मैत्री भयप्रदा ॥ ५ ॥
प्रभोर्दौर्ब्ध्ये मण्डलस्य क्रूरवृत्तिः शुभप्रदा ।
यथादेवस्तथासङ्गी यथासङ्गी तथा प्रभुः ॥ ६ ॥
यदेयं प्रकृतिर्देवी सूते पापमयं जगत् ।
तदायं विकृतो भावो सम्राड्मण्डलमध्यगः ॥ ७ ॥
यदा पुण्यकृता सिद्धिरुदेति वसुधातले ।
परस्परकृता प्रीतिस्तदा सन्तर्पयेद् भुवम् ॥ ८ ॥
किन्त्वेषा विरला भूतिः क्वचित् कालेन साध्यते ।
यस्मिन् देवः स्वविभवै रन्तुमिच्छति भूतले ॥ ९ ॥
भोगभाजो जनाःसर्व्वे राज्येतु विषयः फलम् ।
विषयः क्लेशसंसर्गी क्लेशः स्वार्थकरो नृणाम् ॥ १० ॥
तस्माद्विषयसक्तानां दुर्लभं देववैभवम् ।
स्वस्वार्थं सततं कार्य्यं कर्त्तव्यं तैः परस्परम् ॥ ११ ॥
उद्यमेन यथाकाले यःस्याद् यादृशवैभवः ।
स लभेत तथाभूतिमुद्यमः सम्पदः पिता ॥ १२ ॥

हीनसम्पदमालोक्य नोद्यमादात्मनः पतेत् ।
बुद्धिःसत्कुलसम्पन्ना सर्व्वं साधयितुं क्षमा ॥ १३ ॥
सम्भवेत्तु यथायोगैः साज्ञाये प्रीतिरुज्ज्वला ।
तावत्कर्म्म विधातव्यं सज्जनैः साधुवृत्तिभिः ॥ १४ ॥
अस्यां महानाट्यभूमौ महाचैतन्यरङ्गके ।
नानामूर्त्तिधरी देवी नित्यं खेलति नूतनम् ॥ १५ ॥
प्रजामण्डलभूनाथाः परस्परविभूषकाः ।
सर्व्वे सर्व्वार्थसंसिद्धौ हेतुभूताःसनातनाः ॥ १६ ॥
तस्मात् परस्परप्रीतिः साधनीया परस्परैः ।
परोच्छेदे निजोच्छेदो निजोच्छेदे परच्युतिः ॥ १७ ॥

राजधानी ।

स्वराज्यधरणीमध्ये महाक्षेत्रसमुज्ज्वले ।
महातरङ्गिणीतीरे दृढे भूम्यन्तरस्थले ॥ १ ॥
आशास्वष्टासु मार्गेण राजसीमाभिगामिना ।
युक्ते महापार्व्वदुर्गैः शोभिते दूरभूषितैः ॥ २ ॥
महादुर्गसमाकीर्णे नानाकौशलरक्षिते ।
जनताचयसंकीर्णे सर्व्वभोग्यप्रपूरिते ॥ ३ ॥
सर्वशिल्पसमाकीर्णे सर्व्वशस्त्राभिरञ्जिते ।
तीक्ष्णदण्डान्विते नित्यं सर्वविद्यासमन्विते ॥ ४ ॥
महारत्नसमाकीर्णे धरणीहृदये वसन् ।
भुञ्जीत परमं शर्म्म श्रीशितेव श्रियां नृपः ॥ ५ ॥

अथवा धरणीप्रान्ते महापर्वतसन्निधौ ।
नदीतीरे समुद्रस्य तीरे वा नगरं चरेत् ॥ ६ ॥
विधिरेष भयार्त्तानां स्वप्रजासु विरोधिनाम् ।
रक्षामार्गेण संयुक्तो राजश्रीर्हि प्रचञ्चला ॥ ७ ॥

सैन्यस्थानम् ।

नगराणां सन्निकर्षे भीषणानाञ्च वैरिणाम् ।
नद्यादीनां तटाद्येषु महान्विते सुमारुते ॥ १ ॥
सुपानीयेऽन्नसंयुक्ते दुर्गेण परिरक्षिते ।
देशान् विभज्य नृपतिः सैन्यस्थापन माचरेत् ॥ २ ॥
यावदङ्गं रणस्याच यावद्देहाभिरक्षकम् ।
यावत् स्थितिविधिस्तावद् यत्नेन परिसाधयेत् ॥ ३ ॥

विद्यास्थानम् ।

यथाधिकारिणो ये स्युः स्वबोधेन शरीरिणाम् ।
तेषां तथाबोधलाभकारणं स्थानमाचरेत् ॥ १ ॥
सुप्रसन्नं निराबाधमन्नपानादिसङ्कुलम् ।
चित्रपुस्तकसङ्कीर्णं सुशिक्षकसुशोभितम् ॥ २ ॥

विचारस्थानम् ।

सैन्याभिरक्षितस्थानसन्निकर्षे महापदे ।
लोकाबाधकरे भद्रे विचारस्थानमाचरेत् ॥ १ ॥
अत्रैव राजसंग्राह्यभागादानं प्रशस्यते ।
पृथग् दण्डविधिस्थानम् पृथग् दायविदां पदम् ॥ २ ॥

पृथग् ग्राह्यस्य चादानं सर्व्वं कार्य्यं पृथक् पृथक् ।
परस्पराविरोधेन साधयेत् पृथिवीपतिः ॥ ३ ॥
एतदाधीन्ययोगेन ग्रामादौ कार्य्यदर्शिनम् ।
योजयेद्येन सर्वंत्र राजदृष्टिस्थिता जनाः ॥ ४ ॥
प्रतिक्षणं समस्तानां तत्त्वं ज्ञात्वा प्रपालयेत् ।
दोषशान्त्या गुणोन्नत्यं सर्वदा परिसाधयेत् ॥ ५ ॥
यदा विद्यान्नरेशानो विवादो बहुधा नृणाम् ।
दुष्टचेष्टा तदालोके वर्द्धितेति विचिन्त्यताम् ॥ ६ ॥
तदर्थं दमयेद्राजा विचारपदनायकान् ।
पुनरन्यान् समायोज्य गुणान् संसाधयन्नृणाम् ॥ ७ ॥
बहूनामभियोगेऽपि यदि वादी न शाम्यति ।
अमात्यो वा स्वयं गत्वा तत्त्वं विद्यान्नरेश्वरः ॥ ८ ॥
रक्षकाणामवेक्षेत यदि दोषान् महीपतिः ।
एतान्निष्काषयेत् कार्य्याद्‌गुरुदण्डेन दण्डयन् ॥ ९ ॥
प्रजाणां यदि दोषेण जानीयाद्‌दुष्टचेष्टितम् ।
तदा ताः शिक्षयेद् यत्नाद्येन दोषः प्रशाम्यति ॥१०॥
न शाम्येत् प्रकृतेः शक्त्या यदि तासां तदा नृपः ।
दुष्टान् संत्रासयेद्दण्डैस्तथापि यदि तादृशम् ॥ ११ ॥
ग्रामानुत्पाद्य दुश्चेष्टान्नाशयेद्वा वनं नयेत् ।
पार्श्वलग्नो यतो वह्निः सर्व्वं दहति काननम् ॥१२॥

विनैव पापवृत्तीनामुद्भवं न विरोधिता ।
सर्व्वस्मिन् स्वधने तुष्टे क्व पापं परिजायते ॥ १३ ॥
तस्मात् पापान्महीशानः प्रजा रक्षेदतन्द्रितः ।
तथासंयोजनात् पुंसां स्थाने स्थाने महात्मनाम् ॥१४॥

मन्त्रिकार्य्यम् ।

विभज्य विषयान् सर्व्वान् कर्त्तव्यमवलोकयन् ।
आत्मवत् साधयेत् कार्य्यं सर्व्वेषामनुमोदितः ॥ १ ॥
सदैव लोककल्याणे नियतः स्यादनातुरः ।
न चणं न्यायतो भ्रश्येदात्मनाशेऽपि निर्भयः ॥ २ ॥
क्रुद्धेऽपि भूपे न क्रोधं भजेत प्रीतिमोहितः ।
तत्त्वं ज्ञात्वा भवेत् कार्य्यी बोधयन् प्रभुमादरात्॥३॥
द्विषत्स्वपि नयं कुर्य्यात् सुहृदोपि विचालयेत् ।
सदा निस्तन्द्रतामाप्य कार्य्याकार्य्ये विचारयेत् ॥ ४ ॥
व्यवहारं विना सर्व्वैः प्रीत्यासङ्गं समाचरेत् ।
तत्रान्यायेषु संरक्तान् वोधयेद्वा परित्यजेत् ॥ ५ ॥
यथाधिकारे ये युक्ता स्तथातान् बोधयेन्मुहुः ।
सहसा न क्रियां कुर्य्याद् दृष्ट्वापौर्व्वापरीं स्थितिम्॥६॥
पावित्र्यं यावदाप्येत तावद् गृह्णीत यत्नतः ।
स्वल्पोपि दोषकलुषो मन्त्रिणं हन्ति तत्क्षणम् ॥७॥
राज्ञोपि मन्त्रिणः श्रैष्ठ्यं कथ्यते मन्त्रवेदिभिः ।
तद्दोषगुणसम्पाद्यौ हानिलाभौ शरीरिणाम् ॥ ८ ॥

स चेद्देवगुणैर्युक्तस्तदा मन्त्रीति गीयते ।
अन्यथा नाममात्रेण क्रव्यात् पुण्यजनो यथा ॥ ९ ॥
स्वस्मिन् सर्व्वाधिकारेपि स्वामिनं न विमानयेत् ।
स्वाम्यधीनाखिलप्राप्तिरिति नित्यं विचारयेत् ॥ १० ॥
यः सम्मुखीनः संग्रामेष्वेकः सर्व्वाभिभावुकः ।
नासौ प्राकृतलोको हि दुर्निवार्य्यो भयङ्करः ॥ ११ ॥

प्रजाकार्य्यम् ।

समये करसंदानमाज्ञायाः प्रतिपालनम् ।
न्याये निर्वादतानित्यमन्याये दोषकीर्त्तनम् ॥ १ ॥
आपत्काले सहायत्वं विशेषाद्धनमानवैः ।
सम्पत्सूत्साहसम्प्रीत्यौ दर्शने देवभाविता ॥ २ ॥
विघ्नप्तिरात्मव्यापत्तेः कीर्त्तनं सुखसम्पदः ।
राजवश्यकरो धर्म्मः प्रजानां परमार्थदः ॥ ३ ॥
यदि शाठ्यं नरेशानः कुर्य्याल्लोभसमन्वितः ।
कर्त्तव्या ह्यात्मनो रक्षा प्रजाभिः शठतादिभिः ॥ ४ ॥
यथा कार्य्याभिसन्तोषी राजा स्यात् लोकपालकः ।
तथा वाक्येन सम्पाद्य कार्य्यं कालप्रतीक्षणम् ॥ ५ ॥
अद्यवापि शतान्ते वा दुःखस्यान्तो भविष्यति ।
चिरवासेपि नो मैत्री परं द्वेषोदयश्चिरम् ॥ ६ ॥
राजप्रजोचिताचारैर्नानागुणसमन्वितैः ।
चञ्चलेयं चलादेवी नीयते चिरबन्धनम् ॥ ७ ॥

साधारणी नीतिः।

तत्र विद्यास्तुतिः मूर्खनिन्दा।

यत् किञ्चिद्वर्त्तते लोके लोकानां शुभसाधनम्।
नास्ति विद्यासमं किञ्चित् तस्माद्विद्यां समभ्यसेत्॥१॥
पतितम्वा दुराचारं कुलं विद्या समुद्धरेत्।
हीनोऽप्युन्नति मायाति विद्यारत्नसहायवान्॥ २॥
कुटीरस्थोपि विद्यावान् यत्सुखं लभते सदा।
तत्शतांशं न लभते मूर्खः साम्राज्यभागपि॥ ३॥
भूमिस्थोपि स्वर्गवासी निर्धनोपि धरापतिः।
दुष्कुलोपि सदैवार्च्यो विद्वानेको न चापरः॥ ४॥
नेत्रहीनो न चान्धःस्यान्मूर्ख एवान्ध उच्यते।
नेत्रहीनोपि चक्षुष्मान् विद्यानेत्रसहायवान्॥ ५॥
विद्वान् यथातथास्थायी सर्व्वमीक्षितुमीश्वरः।
वालिशः सर्व्वमालोक्य न किञ्चिद्वेत्ति तत्त्वतः॥६॥
निरामयः सदा विद्वांस्त्रिषु कालेषु शोभते।
पदे पदे समुत्पत्तिर्मूढ़ानां विपदां सदा॥ ७॥
लक्षेष्वेव हि मूर्खेषु विद्वानेकः प्रशस्यते।
किम्भवेदश्मसङ्घे न यत्र चिन्तामणिस्थितिः॥ ८॥
विदुषा शत्रुता श्लाघ्या न च मूर्खेण मित्रता।
सदा न्यायकरो विद्वान् सदाऽन्यायकरोऽपरः॥ ९॥

सम्पच्युतोपि लभते विद्वांस्तां पुनरेवहि ।
मूर्खः सम्पदमासाद्य क्षणान्नाशयितुं क्षमः ॥ १० ॥
दया शान्तिः क्षमा प्रीति रार्जवं सुनृतं नयः ।
विश्वासः कुशलं मैत्री सर्व्वं विद्वत्सु वर्त्तते ॥ ११ ॥
क्रौर्य्यं शाठ्यं दुराचारो दुर्मतिर्दुर्नयोऽनृतम् ।
अविश्वासः कृतघ्नत्वं सर्व्वं मूर्खेषु वर्त्तते ॥ १२ ॥
स्वदेशे वा विदेशे वा दुर्गमे दस्युसंप्लवे ।
सर्व्वत्र विदुषां मित्रं न कस्मिन् विपदां लवः ॥१३॥
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ।
धनहीनो नृपस्तुच्छो माननीयः सदा बुधः ॥ १४ ॥
राज्ये रिपुभयं नित्यं धने चौरादितो भयम् ।
सर्व्वभीतिविनिर्म्मुक्तं विद्यारत्नं न चापरम् ॥ १५ ॥
व्यवसाये ध्रुवा बुद्धिर्दाने च परिवर्द्धते ।
तस्माद्विद्यासमं लोके न चान्यत् परमं धनम् ॥ १६ ॥
विना यत्नेन समयो विदुषामेव गच्छति ।
कृत्वा यत्नशतं मूढ़ो न सुखं जीवितुं क्षमः ॥ १७ ॥
कामक्रोधादयो दुष्टा रिपवः प्रबला यदा ।
तदा त्रातुं दुराचाराद् विद्यैव परमा सुहृत् ॥ १८ ॥
विच्छेदाद्बन्धुरत्नादेर्यदा शोकः प्रवर्द्धते ।
विद्यैव बोधदानेन तदा जीवयितुं क्षमा ॥ १९ ॥

किम्भवेज्जीवनैः पुंसां यदि विद्या न विद्यते ।
जायन्ते वा भवे केचिन्म्रियन्ते वा न केचन ॥ २० ॥
परमिन्द्रियसन्तृप्तः पशुभ्यः किं विशिष्यते ।
जातमात्रेण जन्तूनां रूपादेर्भोगयोग्यता ॥ २१ ॥
विद्या ददाति विनयं विनयाद् याति पात्रताम् ।
पात्रत्वाद्धनमाप्नोति धनाद्धर्म्मं ततः सुखम् ॥ २२ ॥
विद्याहीनो दुराचारः स्वकुलं नाशयेत् क्षणात् ।
अंशतो जायमानोपि यथा दावानलो वनम् ॥ २३ ॥
विद्याहीना न शोभन्ते सभायां भूषिता अपि ।
किं हेमबद्धचरणाः काका राजन्ति पिञ्जरे ॥ २४ ॥

विद्याशिक्षा ।

ज्ञातेऽधिकारे वाक्यानां शिक्षयेद् वचनैः शिशून् ।
यथाप्रीतिक्रमान्नाम ज्ञातव्यानां शनैः शनैः ॥ १ ॥
व्यतीते पञ्चमे वर्षे गुरोर्गृहमुपाचरन् ।
विनीतस्तद्वशे तिष्ठन्नभ्यसेद् बोधमुत्तमम् ॥ २ ॥
स यथाज्ञापयेन्नित्यं पालनीयं प्रयत्नतः ।
तदाज्ञालङ्घिनां शर्म्म नेह वाऽमुत्र विद्यते ॥ ३ ॥
शुक्रशोणितदानेन भवेतां पितरौ गुरू ।
तयोरप्यधिको ज्ञेयो ज्ञानदः परमो गुरुः ॥ ४ ॥
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
कर्त्तुं विनिमयं तस्य पृथ्वीं दत्त्वा न शक्नुयात् ॥ ५ ॥

यो गुरोस्ताड़नं प्राप्य कुशलं मन्यते सुधीः ।
स एव लभते विद्यां सर्वंच शुभदायिनीम् ॥ ६ ॥
गुरुर्देवो गुरुर्बन्धुर्गुरुर्माता गुरुःपिता ।
न गुरोरधिकः कश्चित् त्रिषु लोकेषु विद्यते ॥ ७ ॥
अल्पमप्याचरंस्तस्य विमतं न फलं चरेत् ।
गुरोर्हितं प्रकर्त्तव्यं वाङ्मनःकायकर्म्मभिः ॥ ८ ॥
मातृवत् गुरुपत्नीं यः सोदरावत् तदात्मजाम् ।
स्वभ्रातृवत् सुतांस्तस्य पश्येत्स फलमाप्नुयात् ॥ ६ ॥
स्वजनास्तस्य सम्मान्यास्तद्रिपुं स्वरिपुं स्मरेत् ।
तन्मित्रं मित्रवत् पश्येत् तद्धितं स्वहितं मतम् ॥१०॥
चापल्यं प्रभुतौद्धत्ये शाठ्यं दुर्नयवञ्चने ।
सर्व्वमेतद् गुरोरग्रे वर्ज्जयेद् यत्नतः सुधीः ॥ ११ ॥
काचिदर्थकरीविद्या काचित् तत्त्वार्थबोधनी ।
द्वे एव शुभदे विद्ये अभ्यस्येते प्रयत्नतः ॥ १२ ॥
धनानि धर्म्महीनस्य विफलानि भवन्ति हि ।
धनहीनस्य धर्म्मोऽपि न सिध्यति कदाचन ॥ १३ ॥
यथाकुलं यथाचारं यथाबुद्धि यथान्तपम् ।
अभ्यस्या धनदा विद्या प्रथमं शुभमिच्छता ॥ १४ ॥
यदि द्रव्यानुरोधेन विद्याप्यन्यापि सेव्यते ।
कर्त्तव्यं तदपि प्रेम्णा स्वस्वधर्म्माविरोधतः ॥१५॥

विद्याभ्यासस्य समये हीनवृत्तिमुपाश्रयन् ।
त्यजेद्विषयसम्प्रीतिं सा ह्यस्य परिपन्थिनी ॥ १६ ॥
तद्ध्यायी तज्जपेन्नित्यं तच्चित्तस्तत्परायणः ।
योऽभ्यसेत् सततं विद्यां तस्य ह्येषा प्रसीदति ॥१७॥
शास्त्रं सुसेवितमपि सेवनीयं पुनः पुनः ।
न विश्वासं चरेत् शास्त्रे यथाशास्त्रं तथानृपः ॥१८॥
एकामपि चरेद् विद्यामाद्यन्तपरिशोभिताम् ।
ततस्तां भूषयेद्धीमान् नानाशास्त्रैः सुभूषणैः ॥ १९ ॥
पल्लवग्राहि पाण्डित्यमौदार्य्यं निर्धनस्य च ।
वाग्वैभवञ्च मूर्खाणां सर्वमेतद् विडम्बना ॥ २० ॥
नैकाकी सेवयेद्विद्यां दशभिः सह चाभ्यसेत् ।
दशभिर्मेलने विद्या स्फूर्त्तिमायाति सत्वरम् ॥ २१ ॥
यत्र शिक्षा ततश्चोर्द्ध्वं स्वयं पश्येत् शनैः शनैः ।
पठित्वा को ह्यनन्तायाः पारं गच्छेच्चिरादपि ॥२२॥
कार्य्योपयोगिनीं विद्यां समभ्यस्य गुरोः कुलात् ।
नित्यं नवायां कुर्व्वीत यावज्जीवं स्थिरां रतिम् ॥२३॥
यत्र यादृग् गुणं पश्येत् प्रणयात्तं समाश्रयन् ।
भ्रामरीं वृत्तिमाश्रित्य सर्वस्मादभ्यसेत् सदा ॥ २४ ॥
यथाधिकारे यत्प्राप्तं लेखयेत्तद् यथामति ।
नित्यं नवं नवं पश्येदेकंम्वा द्वयमेव वा ॥ २५ ॥

अभ्यासाज्जायते ज्ञानमभ्यासः कालसम्भवः ।
कालाभ्याससहायस्तु लभते देवसम्पदम् ॥ २६ ॥
यदीच्छेत् परमां विद्यां तदैवं सञ्चरेज्जनः ।
दुष्टा वा गुणिनो वापि मूर्खा वा दूरदर्शिनः ॥ २७ ॥
सर्वैः सम्मीलनं कुर्य्यात् प्रणयेन शनैः शनैः ।
यदि तत्र भवेद् दुःखं सह्यं तदपि यत्नतः ॥ २८ ॥
यत्र यल्लभ्यते किञ्चित् तद्धेतुं तत्फलं क्रमात् ।
प्रणिधानेन सम्पश्येन्न क्वचिन्मोहमाचरेत् ॥ २९ ॥
प्रणये किन्तु सर्वत्र प्रत्येकं जनसंसदि ।
घोररूपा महारात्रिर्मोहं दद्यात् क्षणं क्षणम् ॥३०॥
यत्र तन्मोहकवले निपतेद् दृष्टिविच्युतः ।
यावज्जीवं प्रयत्नान्न तस्मादुद्धर्त्तुमर्हति ॥ ३१ ॥
साहाय्येन गुरोस्तस्मात् क्षिपेत् पादौ शनैः शनैः ।
यो दृष्टपूर्वस्तद्‌घ्यासादुत्ततार निरामयः ॥ ३२ ॥
अनादाविह संसारे न गुरुर्दुर्लभः कदा ।
किन्तु लभ्यः प्रयत्नेन श्रद्धापूजादिभिर्नृणा ॥ ३३ ॥
यथाविद्याभिलाभःस्यात्तथासम्पद्विवर्द्धिनी ।
मोहयत्यात्मदासत्वे दृष्टिरोधं करोति वै ॥ ३४ ॥
तत्रैव लब्धसन्तोषो रमते हतचेतनः ।
नान्यत् कामयते किञ्चित् स्यादपि श्रेयसि परम् ॥३५॥

यावत् स्वात्मातमत्रास्ति नोपेक्षां कुत्रचिच्चरेत् ।
प्रणिधानेन सम्पश्येद् यत्र यत् किञ्च लभ्यते ॥ ३६ ॥
यत्र यत् सञ्चरेत् किञ्चित् तदादाय प्रयत्नतः ।
पश्येदात्मनि तत्सर्वं यथाहेतु यथाफलम् ॥ ३७ ॥
यथा मे येन भावेन या या वृत्तिरुपस्थिता ।
यत्फलं कुरुते सा हि सर्वत्र समरूपिणी ॥ ३८ ॥
एवं पश्यन् भुक्तसङ्घेष्वान्तरं भावमादरात् ।
सर्व्वत्रातिदिशंस्तं तमैश्वर्य्यं लभतां भुवि ॥ ३९ ॥
यत्रास्ति प्रकृतिर्देवी तत्र चैतन्यमाश्रिता ।
द्वयोरेव हि योगेन सर्व्वमेतच्चराचरम् ॥ ४० ॥
तारतम्यं विलासोऽस्या यथाकर्म्म प्रजायते ।
यत्र देहो द्वयं तत्र नान्यदस्ति किमप्यहो ॥ ४१ ॥
यत्र देहस्तत्र भोगः शब्दादेर्नापरस्य वै ।
तत्रैव विषयासङ्गि कामक्रोधादिकं सदा ॥ ४२ ॥
विषयालभ्यलभ्यत्वात् कामादेर्वृद्धिहीनते ।
कामादिकं परित्यज्य किन्तु ह्येष न तिष्ठति ॥ ४३ ॥
विलासं प्रकृतेरेवं वीक्ष्य चैतन्यसागरे ।
विराजते विराड्भूत्वा सर्वभुक् सर्ववर्जितः ॥ ४४ ॥
यावज्जीवो न लोकेत सर्वमेतच्चराचरम् ।
तावन्न दुःखपाशेभ्यो विमुच्येत कदाचन ॥ ४५ ॥

यत्राज्ञानं भवेत्तस्मिन् दुःखमाप्नोति मानवः ।
राजा वा पण्डितो वापि साधुर्वा दुष्ट एव वा ॥४६॥

गुरुकर्त्तव्यम् ।

गुरुरप्यतियत्नेन शिष्यान् शास्यात् सुतानिव ।
सर्वदा दर्शयेन्नीतिं परिहासं विवर्ज्जयेत् ॥ १ ॥
परीक्ष्य बोधसम्पत्तिं दृष्ट्वापि वयसां स्थितिम् ।
शिक्षायां योजयेत् शिष्यान् यथा गृह्णन्ति ते सुखम् ॥२॥
राजा वा राजपुत्रो वा दीनो वा मुनिपुत्रकः ।
सर्व्व एव समं दृश्या गुरुणा पाठसंसदि ॥ ३ ॥
तोषयेत् तापसम्प्राप्तौ ताडयेद् दुष्टवृत्तितः ।
पोषयेद् भोजनाभावे रोषयेन्न कदाचन ॥ ४ ॥
न वञ्चयेत् स्वबोधेषु न चापल्यं समाचरेत् ।
नालस्यमाश्रयेत् पाठ्ये प्रीतिं मैत्रीं समाश्रयेत् ॥ ५ ॥

पाठोत्तरकर्तव्यम् ।

एवं गुरोः समभ्यस्य विद्यां तोषं विधाय च ।
स्वीकुर्य्यात् कुशलां भार्य्यां मनोरामां सुलक्षणाम् ॥१॥
कृतदारो यथाविद्यं तथाभ्युदयशालिनाम् ।
वासेन वृत्तिमालोक्य कृत्याकृत्यं समाचरेत् ॥ २ ॥
तावन्न फलदा विद्या पठितापि भवेन्नृणाम् ।
यावत्तथाभ्युदयिभिः सहवासो न जायते ॥ ३ ॥

वाणिज्ये लभ्यते लक्ष्मीस्तदर्द्धं कृषिकर्म्मणि ।
तदर्द्धं राजसेवायां भिक्षायां नव लभ्यते ॥ ४ ॥

वाणिज्यविधिः ।

यदि वाणिज्यकामी स्यात् तर्हि तज्जीविभिः सह ।
मिलित्वा लोकयेद् वृत्तिं ये यथा सिद्धिमागताः ॥१॥
कस्य द्रव्यस्य किं नाम कस्मिन् वा जायते हि तत् ।
किं वा प्रयोजनं तस्य केन वा परिगृह्यते ॥ २ ॥
कदा वा स्वल्पमूल्यं स्यात्कदा दुर्लभमूल्यभाक् ।
एवं वीक्ष्य स्वल्पमूल्यैः क्रीत्वा लाभेन सन्त्यजेत् ॥३॥
यत्र वा जायते यद्धि तत्र तत् क्रयमाचरन् ।
दुर्लभं तद्भवेद् यत्र तत्र विक्रयमाचरेत् ॥ ४ ॥
पल्लीग्रामे प्रजातानां विक्रयो नगरे शुभः ।
नगरे च प्रजातानां पल्लीग्रामे तथामतम् ॥ ५ ॥
विशेषतो जनैर्यत्र स्थाप्यते नगरं नवम् ।
वाणिज्यं फलदं तस्मिन् अचिरेण शुभार्थिनाम् ॥६॥
समभावेन सर्वत्र जड़े वा चतुरेऽपि वा ।
व्यवसायो विधातव्यः स्पष्टतः सत्यवार्त्तया ॥ ७ ॥
वञ्चनेऽधिकलाभेऽपि न तत्कार्य्यं कदाचन ।
आपातरम्यं चेत्तत्स्यात् वञ्चनं कालतोऽहितम् ॥८॥
सत्यवृत्तेषु विश्वासो जायते प्राणिनां ध्रुवम् ।
विश्वासाद् व्यवहाराणाम् समृद्धिर्जायते क्रमात् ॥९॥

व्यवहारेषु वृद्धेषु स्वल्पलाभो बहुर्भवेत् ।
सर्वतो विन्दुपातेन मेघैः सम्पूर्य्यते मही ॥ १० ॥
ग्राह्ये देये यदा वार्त्ता विधातव्या तदैव तु ।
वार्त्तानुसारात् सम्पाद्ये तेन कार्य्यो व्यतिक्रमः ॥ ११ ॥
प्रथमं स्वकरेणैव स्वेचणेन सुसाधयेत् ।
फलवान् प्रतिभालाभाद् दासान् संयोजयेत् सुधीः १२
यदि हानिः कदाचित् स्यात् न तत्र भयमावहेत् ।
पुनस्तत् साधयन् यत्नात् स्वधनं परिपोषयेत् ॥ १३ ॥
वस्तुयन्त्रमृणावाप्ती वाणिज्यमपरं द्वयम् ।
एते अपि महावृद्ध्यै जायते वीच्य कुर्वताम् ॥ १४ ॥
संगृह्य हैमरत्नादि भूमिलेख्येन वा पुनः ।
वृद्ध्यादानाद्धनानां तु नानाविधमृणार्पणम् ॥ १५ ॥
हैमादे वीचणं न्याय्यं द्रव्यदाने प्रशस्यते ।
अनेके कृत्रिमैर्द्रव्यैर्वञ्चयन्त्युत्तमर्णकान् ॥ १६ ॥
भूमिं संरच्य देयञ्चेत्सा तस्येतिविचारयन् ।
मूलं संरच्य लेख्येन दद्याद्धनमथार्थिने ॥ १७ ॥
केवलं लेख्ययोगेन यदि देयं तदा पुनः ।
अधमर्णस्य विषयं पश्येत् स्वशोधनचमम् ॥ १८ ॥
कालेन वृद्धिर्ग्रहणमत्यये वृद्धिवर्द्धनम् ।
देयस्य समयोल्लापे मूलमाकृष्य शोधनम् ॥ १९ ॥

सर्वेषु व्यवहारेषु साक्षिसंरक्षणं हितम् ।
विशेषतो लेख्यदाने भूम्यादे रक्षणे तथा ॥ २० ॥
प्रमाणं विधिवद् ग्राह्यं देशकालादिचिन्तया ।
भ्रमन्ति वञ्चका यस्माद् वञ्चनाय सदा नृणाम् ॥२१॥
विश्वासिनो वा धनिनो द्वयोरेव सुविद्ययोः ।
वस्तुयत्नं शुभाधानं साहसं किन्तु कारणम् ॥ २२ ॥
प्रथमं तद्विनिर्म्माणे वस्तुद्रव्यव्ययो यतः ।
तस्मात्साहसयुक्तानां विवेकात्कुर्व्वतां हितम् ॥ २३ ॥
स्वल्पद्रव्येऽपि विश्वासी यदिस्यात् परतोधनम् ।
संगृह्य कारयेद् यत्नं विश्वासान्नच्युतो भवेत् ॥२४॥
द्वित्रिचतुःपञ्चभिर्व्वा मिलित्वा यदि साध्यते ।
तदा संरक्षणे स्वस्य प्रत्येकं यत्नमाचरेत् ॥ २५ ॥
उदारो व्यवहारेषु योऽलसो वाप्यनीक्षकः ।
स भवेद्वञ्चितो नित्यं वञ्चकैः सुदुरात्मभिः ॥ २६ ॥
विदुषामपि वाणिज्यं हितालेख्येन जायते ।
निर्भयं लोककल्याणं धनमानादिवर्द्धनम् ॥ २७ ॥
यथा तत् साध्यते लोकैस्तेषां वृत्तिमनुस्मरन् ।
साधयेदात्मनः कार्य्यं सावधानं विलोककः ॥ २८ ॥
यत एव विघ्नचिन्ता तत्सर्व्वमवलोकयन् ।
प्रणिधानेन कुर्व्वीत येन हानिर्नचोदयः ॥ २९ ॥

वाणिज्यं साहसं सूते चातुर्य्यंवीर्य्यमेव च ।
वाणिज्यं कुर्व्वतः पुंसः साम्राज्यमपि सिध्यति ॥२०॥

कृषिकर्म्म ।

यस्मिन् देशे यदा यद् यज्जायते येन हेतुना ।
तत् सर्वमवलोक्यैव कृषिकर्म्म समाचरेत् ॥ १ ॥
ताड़येत्तोषयेद्दासान् कृषिकर्म्मनियोजितान् ।
नचैकमाश्रयेत्तेषु बुद्धिमान् फलसिद्धये ॥ २ ॥
ताड़ने जनयेद् भीतिं तोषणे प्रियतां व्रजेत् ।
अताड़ने क्रियाहीनोह्यसन्तोषे रिपुर्भवेत् ॥ ३ ॥
येनोत्साही चरेत्कार्य्यं तथा प्रीतिं समाचरेत् ।
येन हीनक्रियो न स्यात् तथा सन्ताड़येत् शनैः ॥४॥
वनान्युत्पाद्यदेशेषु निःशष्येषु चिराय च ।
नद्या वा तीरभूमिषु कृषिकर्म्म प्रशस्यते ॥ ५ ॥
यत्र यल्लभ्यते वीजं गौरवादिष्टसाधनम् ।
अन्यस्मादपि संगृह्य रोपयेद् यत्नतः सुधीः ॥ ६ ॥
पशुभ्यः सततं रक्षा जनानां परिपोषणम् ।
समये कर्षणं भूमेः काले वीजस्य रोपणम् ॥ ७ ॥
उत्पाटनं तृणादीनां वृद्धये सारयोजनम् ।
समये छेदनञ्चैव यत्नेन परिरक्षणम् ॥ ८ ॥
विक्रयः समये तादृग् वीजानामभिरक्षणम् ।
रोगान्निर्म्मोचनं यत्नान्मूषिकादिनिवारणम् ॥ ९ ॥

एवं विज्ञाय तत्त्वेन दोषादोषौ प्रयत्नतः ।
कुर्व्वतां कृषिकर्म्माणि विपुलः स्यात् फलोदयः ॥१०॥

दास्यम् ॥

सेवा तु कठिना वृत्तिर्दुःसाध्या योगिनामपि ।
तत्साधनसमर्थस्य नासाध्यं विद्यते क्वचित् ॥ १ ॥
सेवनं सन्निकर्षेण साधनं कर्म्मणान्तथा ।
विख्याता द्विविधा सेवा द्विधैव फलसाधनम् ॥ २ ॥
यः प्रभोः सन्निकर्षस्थो वाङ्मनःकायकर्म्मभिः ।
तोषयेत् तं दिवारात्रं स सन्निकृष्टसेवकः ॥ ३ ॥
स्वामिदत्तं स्वाधिकारं साधयेद् यः समाहितः ।
स दासः कार्य्यकृन्नाम दूरे वा निकटे स्थितः ॥ ४ ॥
न सेव्यं प्रभुसंग्राह्यं वेशभूषादिकञ्च यत् ।
नोत्तरं सविधे देयं तर्ज्जितेनापि दारुणम् ॥ ५ ॥
सर्व्वदाज्ञापालनाय यतितव्यं समाहितैः ।
संशयेऽपि जीवितानां नाज्ञा लङ्घ्या कथञ्चन ॥६॥
विद्वेष्यः स्वामिविद्विष्टो मान्योनेनाभिमन्यताम् ।
प्रेमार्हः स यत्र त्वप्तस्तद्वृत्तिमनुसञ्चरेत् ॥ ७ ॥
क्व द्विष्टः कुत्र वा प्रीतः प्रणिधानेन लोकयन् ।
द्विष्टं द्विषन् प्रियं कुर्वन् स्वामिनं वशयेद् बलात् ॥८॥
न क्रोधं दण्डितो गच्छेत् स्वापायमनुशोचयन् ।
ताड़ितोऽपि हितं कुर्य्यात् स्वापराधमनुस्मरन् ९॥

वर्द्धने स्वामिसम्पत्तेर्भजेदुत्साहमादरात् ।
विनाशे क्लेशवान् भूत्वा हितचेष्टापरो भवेत् ॥ १० ॥
सर्व्वदा हितमन्विच्छेन्नाहितं मनसा चरेत् ।
न प्रभोर्द्वेषिणामग्रे तिष्ठेल्लाभशतैरपि ॥ ११ ॥
गोपयेत् तिष्ठतो दोषानसतोऽपि गुणान् वदेत् ।
सर्वदा नम्रभावेन देववत् तं विलोकयेत् ॥ १२ ॥
तिष्ठतोऽनुज्ञयातिष्ठेच्चापल्यं नाग्रतश्चरेत् ।
उत्तिष्ठतः पुरोत्तिष्ठेच्चरेत् पश्चादनुव्रतः ॥ १३ ॥
प्रभोः परिजनान् सर्व्वान् पश्येत् पित्रोः समान् सदा।
साधयेत् प्रभुभोग्यानि स्वयं लोभविवर्ज्जितः ॥ १४ ॥
नापृष्टः कथयेत् किञ्चित् पृष्टः सत्यं वदेत् प्रियम् ।
समक्षे नाप्रियं किञ्चिद् ब्रूयात् पृष्टोऽपि तत्त्वतः॥ १५॥
तज्जनानखिलान् प्रीत्या तोषयेत् सुसमाहितः ।
विद्वेषं नैव कुर्व्वीत तेषु कुत्रापि भव्यकृत् ॥ १६ ॥
स्वामिनां पुरतः कस्य न कार्य्यं सूचनं क्वचित् ।
शत्रोरपि हितं ब्रूयादन्येषां किमु निन्दया ॥ १७ ॥
प्रतीपं स्वस्य यं पश्येद्धनमानादिसाधनैः ।
तमपि स्वप्रियं कुर्य्याद् य इच्छेदात्मनः शुभम् ॥१८॥
एकोऽपि शत्रुर्भेतव्यः सहस्रेष्वपि बन्धुषु ।
स्निग्धकाननमध्यस्थः किं न दाहकरोऽनलः ॥ १९ ॥

दोषं दृष्ट्वा गुणान् ब्रूयान्न दोषः कस्यचित् पुनः ।
निवृत्त्यै तं रहो ब्रूयाद् यदि पात्रं न चान्यथा ॥२०॥
सन्तोषाद्दत्तमादद्यात् स्वेच्छातो न हरेत् पुनः ।
आत्मार्थं न वदेत् किञ्चित् परार्थं यत्नमाचरेत् ॥२१॥
फलं वस्त्रं धनं रत्नं यत् स्वामी तोषतोऽर्पयेत् ।
यत्नतस्तत् समादद्याद्बहुमानपुरःसरम् ॥ २२ ॥
या श्रूयते यदा वार्त्ता सा न कथ्या कुतश्चन ।
नान्यसम्पदमालोक्य ग्लानिं गच्छेत् सुखं चरेत्॥२३॥
न मन्त्रकाले स्थातव्यं विना स्वामिमतं कदा ।
न रहः श्रवणं कार्य्यं मन्त्रितस्य कदाचनः ॥ २४ ॥
मन्त्रकाले स्थितः कश्चिन्न दद्यादुत्तरं स्वयम् ।
पृष्टो ब्रूयाद् यथान्यायममतञ्चेत् परित्यजेत् ॥ २५ ॥
वाक्यशेषो न यावत् स्यात् तावन्नोत्तरमाचरेत्।
न वागाडम्बरं कुर्य्याद्वदेद्वाचं सयुक्तिकम् ॥ २६ ॥
न च सम्मतिमादाय भुञ्जानं वा रहःस्थितम् ।
स्नातं नाभिचरेत् कश्चित् सहस्रेष्वपि कर्म्मसु ॥२७॥
तोषितः सेवया नित्यं तोषणीयः पुनः प्रभुः ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु स्वामिकुलेषु च ॥२८॥
स्वेन साधितसत्कार्य्यं न स्वयं मुखतो वदेत् ।
द्रष्टा स्वामी स्वकार्य्याणां स्वयमेव फलप्रदः ॥ २९ ॥

परैः प्रत्यभियुक्तोऽपि न क्रोधं सञ्चरेत् क्वचित् ।
अभियोगः सुवृत्तानां स्वतः कालेन नश्यति ॥ ३० ॥
अधिकाराधिकं किञ्चिन्न कुर्य्यात् स्वयमेव हि ।
दर्शयेत् स्वां मतिं यस्मादधिकारः प्रवर्द्धते ॥ ३१ ॥
विश्वस्तादपि भेतव्यं स्वसमाजे जनैः सदा ।
एकमुन्नतमालोक्य प्रायशो द्वेष्टि चापरः ॥ ३२ ॥
वदेद्रहस्यं मैत्रेण स्वामिनं न कदाचन ।
न तं वश्यं विजानीयात् स्वामिनं स्वामिनं पुनः॥३३॥
यथाधिकारे ये तुष्टा माननीयास्तु ते तथा ।
अवज्ञातस्य दुश्चेष्टा चिरादपि न नश्यति ॥ ३४ ॥
स्वाम्युक्तनिजतत्त्वोऽपि स्वच्छिद्रं न प्रकाशयेत् ।
प्रभोरवज्ञा तं हन्यात् स किं कर्त्तुं प्रभोः क्षमः॥३५॥
यथाधिकारे युक्ता ये निरालस्येन सा क्रिया ।
पालनीया प्रयत्नेन नीतिमार्गेण तैः सदा ॥ ३६ ॥
एवं न्यायपरीक्षाणां प्रभुकार्य्येषु तिष्ठताम् ।
दिने दिने वर्द्धते श्रीः शुक्लपक्षे विधोरिव ॥ ३७ ॥

भिक्षा ।

नास्ति भिक्षासमं किञ्चिद् दुःखं संसारिणामिह ।
वरं मृत्युरपि श्रेयान् नच भिक्षा कथञ्चन ॥ १ ॥
पण्डितो वा धार्मिकोऽपि कुलजोप्यपि रूपवान् ।
भिक्षया हीनतां प्राप्य तृणवत् परिभूयते ॥ २ ॥

नास्ति भिक्षार्थिनां मित्रं नानुरक्तो जनः क्वचित् ।
घृणां कुर्वन्ति सकला नाद्रियन्ते सुता अपि ॥ ३ ॥
वृद्धस्य तरुणी भार्य्या भिक्षुकस्य सुखस्पृहा ।
शाठ्येन मित्रतालिप्सा तिस्रः पुंसां विडम्बना ॥ ४ ॥

धनप्रशंसा ।

दुर्वृत्तादाढ्यतामाप्य जनो याति महत् पदम् ।
तस्माद्धनसमं किञ्चिन्नास्ति संसारिणामिह ॥ १ ॥
धनिनां शाठ्यतो वृत्तिश्चातुर्य्याय प्रकल्प्यते ।
साध्वी वृत्तिर्निर्धनानां जाड्येषु परिणामिनी ॥ २ ॥
येषामच्छत्वमौदार्य्यं कटुता स्पष्टवादिता ।
दुष्टता बुद्धिमत्ता च कस्तेषां साम्यमाचरेत् ॥ ३ ॥
येन तेन प्रकारेण सततं धनमर्ज्जयेत् ।
धनस्य प्राप्तिमात्रेण नरो देवत्वमृच्छति ॥ ४ ॥
यो निर्द्दयः परोच्छेदी कार्य्याकार्य्यविधिच्युतः ।
स राजा गीयते लोकैः सर्वदेवांशसम्भवः ॥ ५ ॥

दास्यदोषः ।

यावत् कर्म्मास्ति संसारे मनःखेदकरं नृणाम् ।
न दास्यादधिकं किञ्चिद् वर्त्तते जगतीतले ॥ १ ॥
यदि हीनक्रियो भूयात् तदोच्चपदभागिनाम् ।
सहस्राणां भृत्यभावैर्दुःखेन समयच्युतिः ॥ २ ॥

चेदुच्चपदगामी स्यान्नीचानां द्वेषसम्भवैः ।
दुःखराशिभिरुत्पीडा दह्यते ऽहर्निशं तदा ॥ ३ ॥
विनैककामसङ्घातमात्मकामो न सिध्यति ।
यस्माल्लोकेषु पर्य्याप्ताः सर्व्वे कामा निरन्तरम् ॥ ४ ॥
यत्कामनिहतावात्मकामसिद्धिः स वै परः ।
तद्वान्धवाश्च तत्प्रीत्या जायन्ते रिपवः क्षणात् ॥ ५ ॥
उन्नतास्तद्भयाद्वैरं लभन्ते दुःखकर्षिताः ।
कामोऽपि दुस्तरो व्याधिर्न शान्तिमधिगच्छति ॥ ६ ॥
यावत् स लभ्यते यत्नात् तावदुच्चाभिलाषिता ।
क्रमाद् दुर्द्धर्षशत्रूणां करालकवले गतिः ॥ ७ ॥
कर्म्मणां महतां सिद्धौ प्रभुर्दानभिया पुनः ।
नोत्साहं कुरुते किञ्चित् स्वधने गौरवं वहन् ॥ ८ ॥
तत्पदासहिचित्तैस्तु जनैश्छिद्रानुसारिभिः ।
मिथ्या वा सत्य एवास्तु दोष उद्भाव्यते सदा ॥ ९ ॥
सर्व्वदा यस्य पार्श्वेषु वर्त्तते वैरिणां गणाः ।
कथम्वा सम्पदस्तस्य तिष्ठन्ति चिरजीविताः ॥ १० ॥
चेल्लवादपराधी स्यात् सत्कार्य्यशतकार्य्यपि ।
तदैव स्वपदाद् भूत्वा च्युतो दुःखि निषीदति ॥ ११ ॥
सर्व्वदोचितकार्य्यस्य सदा चित्ते प्रभोर्भयम् ।
न शाम्यति कदाचित्तु नित्यदोषाभिशङ्किनः ॥ १२ ॥

प्रायशोऽयं स्वभावः स्यात् प्रभूणां प्रथमादरः ।
ततस्तत्पातने चेष्टा सदा छिद्रानुसारिणाम् ॥ १३ ॥
यस्येष्टसिद्धिं नो कुर्य्यात् स शत्रुः स्वजनैः सह ।
तदिष्टसिद्धौ चेद् यत्नः प्रभुः क्रोधपरस्तदा ॥ १४ ॥
सर्वेषामिष्टलाभो न कदाचिदपि सम्भवेत् ।
साक्षाद् दोषकृतोऽपि स्यात् शासने द्वेषकल्मषः॥१५॥
अशासने दोषकृतामक्षमत्वं प्रभोर्दृशि ।
त्रिशङ्कुरिव दुःस्थानो दास एव न चापरः ॥ १६ ॥
यन्मुखस्येक्षणं मृत्योरपि क्लेशस्य कारणम् ।
तस्यापि सेवा कर्त्तव्या दासैरेव न चापरैः ॥ १७ ॥
भुक्तिकाले निशास्वापे विपत्तावुत्सवे तथा ।
सर्व्वदैव प्रभोराज्ञा दासानां शिरसो मणिः ॥ १८ ॥
प्राणैः पणैः सुसिद्धानां स्वाधिकारे समर्पणम् ।
असिद्धावक्षमत्वेन विच्युतिः स्यात् पदात् क्षणात्॥१९॥
अरण्यं वा श्मशानं वा सागरः पर्वतोऽपि वा ।
मरुर्वा दुर्गमं सर्व्वं पदं दासस्य केवलम् ॥ २० ॥
अवजानाति चेत् स्वामी सर्व्वेऽवज्ञाकरास्तदा ।
चेदेष बहुमन्येत विद्वेषो जायते नृणाम् ॥ २१ ॥
विशेषतः सन्निकर्षे सेविनां शतपाप्म नाम् ।
नास्यन्तो दुःखदावाग्ने र्दृशोर्धारा निरन्तरम् ॥२२॥

सर्वदा सेवमानानां चणां चेत् समयच्युतिः ।
चिरसेवा लयं गच्छेत् तिरस्कारस्तु भूषणम् ॥ २३ ॥
यो जीवन् मृत्युमन्विच्छेत् सोऽस्तु सेवाकरोऽन्तिके ।
चिरावरुद्धतो भेदो नचास्त्यन्तिकसेविनाम् ॥ २४ ॥
दुर्लभा दारपुत्रादिप्रीतिरन्तिकसेविनाम् ।
सुप्तिर्भुक्तिर्मनः प्रीतिः सर्व्वास्तेषां विनश्यति ॥ २५ ॥
यदि स्वेच्छावशाद्वापि दोषतो वा पदच्युतिः ।
तदा यत् प्राप्यते दुःखं क्व साम्यं तस्य वर्त्तते ॥ २६ ॥
दूरेऽस्तु द्विषतां वार्त्ता ये स्थिता मित्रवृत्तयः ।
तेऽपि तापकरा भूत्वा हासैः प्राणहराः स्मृताः ॥ २७ ॥
उत्पन्ना दारुणा चिन्ता हृत्पिञ्जरसमाश्रिता ।
पीत्वा मज्जाशोणिताद्यं प्राणान् संहरते क्षणात् ॥ २८ ॥
भिक्षया जीवनं धार्य्यं दिनान्ते भोजनं वरम् ।
उपवासो वरं श्रेयान् न च सेवा कथञ्चन ॥ २९ ॥
अन्येषां नेत्रयोरन्ते सुखिनः सेवका यदि ।
ते जानन्ति निजं दुःखं परे किं परवेदिनः ॥ ३० ॥
कृतज्ञस्तु यदि स्वामी कार्य्याकार्य्यविलोककः ।
दास्यं ग्राह्यं प्रयत्नेन तदा सद्वृत्तिशालिभिः ॥ ३१ ॥
सेवाभिर्महती वृद्धिर्मानस्य विभवस्य च ।
साम्राज्यस्यापि सम्प्राप्तिर्दास्यादपि सुसिध्यति ॥ ३२ ॥

स्वाधीनता।

स्वाधीनताधिकं किञ्चित् सुखदं नास्ति भूतले।
तस्मात् सर्वप्रयत्नेन तदर्थं यत्नमाचरेत्॥ १॥
वाणिज्येषु वर्त्तते सा कृषिकर्म्मणि वा पुनः।
अथवा वीरतावृत्तौ या राज्यमपि साधयेत्॥ २॥

सख्यविधानम्।

मैत्रं कार्य्यं स्वतुल्येन नोत्तमेनाधमेन वा।
विपरीतेन या मैत्री न सा कल्याणदायिका॥ १॥
मैत्रं सर्वेण चेत् श्रेयो वाञ्छ्यं सर्व्वैः समाचरेत्।
नान्तरी वृत्तिरुद्भाव्या न मोहात् कुत्रचित् कदा॥२॥
मानापमानयोः स्वेन समता यत्र वर्त्तते।
सर्वथा मित्रतायोग्यः सकृत्तः स प्रकीर्त्यते॥ ३॥
सर्वथा ह्यान्तरी शुद्धिर्दुर्लभा विषयैषिणाम्।
सर्व एव सुखाशाभी रहोमलमुपासते॥ ४॥
घृणाहेतुर्बहिस्थं स्यादन्तःस्थं नैव दोषकृत्।
तस्माद् गोप्यं प्रयत्नेन यथा विष्ठा तथा मलम्॥५॥
मैत्र्याः स्वभावो निःशाठ्यं निःशाठ्यान्निर्भया क्रिया।
या प्रकाशमुपाश्रित्य तापं जनयति क्षणात्॥ ६॥
उत्तमो निर्भयः प्रायो धनमानादिसम्पदा।
न पापगोपनार्थाय यत्नं चरति तादृशम्॥ ७॥

अधम: स्वमहत्त्वस्य ज्ञापनाय समुत्सुक: ।
यथातथाक्रियालोपान्निन्दामुत्पादयेत् क्षणात् ॥ ८ ॥
शठेन पापनिष्ठेनाकुलजीनास्थिरात्मना ।
मूर्खेण दस्युना स्वामिभृत्यैर्मैत्रं न चाचरेत् ॥ ९ ॥
सकृच्चै: कृतमैत्रोऽपि तद्गुप्तौ यत्नमाचरेत् ।
यत् प्रकाशं गतं पुंसां विपुलं जनयेद् भयम् ॥ १० ॥
प्रथमं जायते मैत्री महाहर्षकरी नृणाम् ।
कालेन हीनतां गच्छन्त्यौदास्यं जनयेत् क्रमात् ॥११॥
स्वल्पदोषेण विच्छिन्ना जनयेद् भयसञ्चयम् ।
तस्मात् प्रथममित्रत्वे सावधानेन भूयताम् ॥ १२ ॥
मैत्रागमसमहावेगे किञ्चित् शक्यं न गुप्तये ।
यावती मानसी वृत्ति: स्पष्टतामेति मित्रयो: ॥१३॥
कालेन शत्रुता जाता वहि: समभिकाङ्क्षताम् ।
उत्पादयति दु:खानि अनिवार्य्याणि यत्नत: ॥ १४ ॥
आत्मवद् य: स्वविघ्नानां प्रकाशे भयसङ्कुल: ।
परीक्ष्य तेन कर्त्तव्यं मैत्रं नान्येन कर्हिचित् ॥ १५ ॥
वहवो वञ्चका दुष्टा मैत्रं कृत्वा प्रयत्नत: ।
ज्ञात्वा तत्त्वं भयं दत्त्वा हरन्ति धनसञ्चयम् ॥ १६ ॥
विशेषतो यौवनेषु वृत्तिर्भोगकरी भवेत् ।
तात्कालिकी मित्रता हि प्रायो दुष्टेन जायते ॥१७॥

तत्कालमात्मनो रक्षा कर्त्तव्यातिप्रयत्नतः ।
येन पश्चाद् भयं न स्याच्चिरतापविवर्द्धनम् ॥ १८ ॥
किं दुष्टदृष्ट्या मित्रस्य परिवारान् न लोकयेत् ।
समक्षेऽपि परोक्षस्य का कथा सख्यकामिनाम् ॥१९॥
न कुर्य्यादर्थसम्बन्धं न द्यूतं न च्छलादिकम् ।
न निन्दां शृणुयात्तस्य येनेच्छेद्विपुलं सुखम् ॥ २० ॥
तत्प्रीतौ प्रीतिमन्विच्छेद् दुःखे दुःखं भजेत च ।
तज्जनानात्मवत् पश्येत् तद्गुणानभिरञ्जयेत् ॥ २१ ॥
विपत्तावात्मनाशेऽपि न पराङ्मुखतां व्रजेत् ।
न गोपयेत् कार्य्यवार्त्तां तेन सर्व्वं विचारयेत् ॥२२॥
तच्छत्रुं शत्रुवत् पश्येत् तन्मित्रं मित्रवत् स्मरेत् ।
एवं प्रीतिसमायुक्तो विशुद्धां मित्रतां चरेत् ॥ २३ ॥
द्वौ वा त्रयो वा कर्त्तव्या एवमात्महितेरताः ।
अधिकस्तापदो यस्माद् बहूनां दुर्लभैकता ॥ २४ ॥
कुलजो ज्ञानवान् स्वस्थः सद्वृत्तो धर्म्मतत्परः ।
मित्रत्वेनानुसन्धेयो न मूर्खः पृथिवीपतिः ॥ २५ ॥
सर्वेषां शुभदा मैत्री विदुषा सह जायते ।
पण्डितः क्रोधतप्तोऽपि नान्यायं कर्त्तुमर्हति ॥ २६ ॥
सर्वैरेव हिता मैत्री साधारण्येन सम्मता ।
व्यवहारैः प्रियालापैरगर्हैः सत्यवृत्तिभिः ॥ २७ ॥

निन्द्येन शतलाभेपि न मैत्रं शुभदं क्वचित् ।
निर्लाभेऽपि सतां मैत्री सर्वदा शुभदायिनी ॥ २८ ॥

सत्यवृत्तिः ।

नास्ति सत्यसमा वृत्तिरिह चामुत्र भव्यदा ।
तस्मात् सर्व्वप्रयत्नेन सत्यवृत्तिमुपाश्रयेत् ॥ १ ॥
सत्यवृत्तिप्रसक्तस्य चित्तदोषः प्रशाम्यति ।
जातोऽपि रिपुदौर्वृत्तात् क्षमार्हःस्यात् स पापकृत्॥२॥
निर्भयः सत्यधर्म्मात्मा सर्वविश्वासभाजनम् ।
सर्व्वैर्नमस्यः सततं सन्तुष्टः पूतमानसः ॥ ३ ॥
किन्त्वेषा कठिना वृत्तिर्दुष्करा ह्यवलम्बितुम् ।
सर्वे विषयिणो यस्माद् विषयोऽन्तजीवनः ॥ ४ ॥
सहसा फलमाधातुं यथा मिथ्या प्रवृत्तिकृत् ।
न तथा सत्यवृत्तिः स्यात् सत्यं तत्त्वार्थदीपनम् ॥ ५ ॥
सर्वे स्वार्थपरा लोकाः स्वार्थं सर्व्वार्थसाधकाः ।
दोषोक्तौ स्वार्थविध्वंसशङ्काकवलिता जनाः ॥ ६ ॥
सत्कर्म्मणीष्टसंसिद्धिर्बहुयत्नमपेक्षते ।
यत्नं दुःखाय जानीयान्न दुःखे वर्त्तते जनः ॥ ७ ॥
कर्म्माभावे फलापेक्षा दुष्टसाधनसाधिका ।
यदुक्तौ भयमुत्पन्नं मिथ्याचारे नियोजयेत् ॥ ८ ॥
सत्कर्म्माधिकभोगेषु प्रवृत्तो यः कदाचन ।
न समर्थो भवेन्मिथ्यात्यागे भोगान्धलोचनः ॥ ९ ॥

एत एव जगच्चक्रचालका राज्यरक्षकाः ।
निपतन्ति महाघोरे सदा सन्तापसागरे ॥ १० ॥
तस्मात् सत्कर्म्मणा लब्धं स्वजनैः सह सम्वसन् ।
यो भुङ्क्ते स महासत्त्वः सत्यवाक् परिजायते ॥११॥
सत्कर्म्मनिरतानान्तु सदा सद्वृत्तिशालिनाम् ।
मिथ्याचारो भवेत् कस्मादहेतोर्न फलोदयः ॥ १२ ॥
मुनिरेष महाचेताः सत्कर्म्मफलभुङ् नरः ।
वहुना तपसा साध्यः सत्यधर्म्मसमाश्रयः ॥ १३ ॥
नास्ति सत्यात् परो धर्म्मो नास्ति सत्यात् परं धनम् ।
नास्ति सत्यात् परं श्रेयस्तस्मात् सत्यं सदाचरेत्॥१४॥

मिथ्या ।

प्रायशो जड़चित्तानां स्वार्थायान्यायसेविनाम् ।
अन्यायकथने भीत्या मिथ्याचारः प्रवर्त्तते ॥ १ ॥
मिथ्यासंसाधने दुष्टैः सङ्गो मिथ्याभिसेविभिः ।
यथासङ्गस्तथा वृत्तिर्यथा वृत्तिस्तथा फलम् ॥ २ ॥
अविश्वासः सदा पुंसां मिथ्यासेविषु जायते ।
अविश्वासाद् विनश्यन्ति व्यवहारक्रियाः शुभाः ॥३॥
व्यवहाराद् विना न्यायादर्थसिद्धिः सुदुष्करा ।
तदर्थं चौर्य्यशाठ्यादि दुष्टा व्यवहृतिः सदा ॥ ४ ॥
या सदा दुःखपङ्केषु निमज्जयति मानवान् ।
कुलान्यपि निमज्जन्ति दूषितानि दुराश्रयैः ॥ ५ ॥

काम: ।

कामो विषयसिद्धीच्छा क्रियासिद्धौ प्रयोजिका ।
योजयत्यखिलान् लोकान् यथावत् तेषु कर्म्मसु ॥१॥
स्वाधिकारानुसारेण प्रवृत्तानां फलप्रदः ।
स्वासाध्ये यतमानानां कामः क्लेशकरः परम् ॥ २ ॥
तस्मात् स्वायत्तचेष्टाभिः प्रवर्त्तेत फलोत्सुकः ।
अस्वायत्तं त्यजेन्नित्यं शतलाभत्रिलोक्यपि ॥ ३ ॥
विना विनाशमेकस्य न कामः सिद्धिमर्हति ।
अपर्य्याप्ता न वर्त्तन्ते येन कामाः कुतश्चन ॥ ४ ॥
तस्मात् स्वायत्तशान्तीनां विघ्नानां परिशोधनात् ।
कामं संसाध्य यत्नेन कृतकृत्यो भवेन्नरः ॥ ५ ॥
न दुःखेन विना शर्म्म संसारेऽस्ति शरीरिणाम् ।
सुखमात्रं ध्रुवं कृत्वा दुःखाघातमुपेक्षयेत् ॥ ६ ॥
यावत् कामयते कामं तावत् कामः प्रवर्द्धते ।
तावज्जनयति क्लेशं क्रमशः प्राणिनामिह ॥ ७ ॥
अनिवार्य्यगतिस्त्वेष देवैरपि सुदुस्तरः ।
यन्न कामयते ह्येष तद्धि कार्य्यं न दृश्यते ॥ ८ ॥
एष एव जगन्मूलमेष मोचनकारणम् ।
यथाचेष्टं प्रवृत्तानां मूलमस्य सुदुस्तरम् ॥ ९ ॥
एवमेव परिज्ञाय क्रोधादीन् रिपुसञ्चयान् ।
सतां सङ्गप्रवृत्तेन भवितव्यं शुभेप्सुना ॥ १० ॥

क्रोध ।

स्वेष्टहानिकरं यत् स्यात् क्रोधस्तद् द्वेषसंज्ञितः ।
विना क्रोधं न दृश्यन्ते लोकाः सर्वे वहिर्मुखाः ॥१॥
यः कश्चिदिष्टमाधातुं यतते तस्य तत् स्थिरम् ।
स विघ्नं कुरुते तस्य स्वार्थः सर्वप्रियो यतः ॥ २ ॥
एवं लोकेषु सततं द्वेषवह्निः समुद्गतः ।
सन्तापयति चेतांसि प्राणिनां तीक्ष्णदहनैः ॥ ३ ॥
विघ्नोच्छेदं विना कश्चिन्न लोके सिद्धिमर्हति ।
यतेत सततं तस्माद् विघ्नानामभिघातने ॥ ४ ॥
यत्र विघ्नः समुच्छेत्तुं न शक्यः साधनैर्निजैः ।
तत्र शान्तिर्विधातव्या सुधीभिस्तत्त्वदर्शिभिः ॥ ५ ॥

लोभः ।

अन्येषां सम्पदं दृष्ट्वा लाभेच्छा लोभ उच्यते ।
तत्रासक्तस्य दुर्वृत्तिर्दुःखराशिश्च नित्यशः ॥ १ ॥
प्रायशो दुर्लभो लोके लोभहीनो महोदयः ।
भीत्या वा साधनाशक्त्या तं लोभं गोपयेज्जनः ॥ २ ॥
न कुर्य्यात् तत्फलाभीप्सां या नित्यं दुःखसाधिका ।
यदि कुर्य्याद्वीरवृत्त्या सिद्धिरस्य शुभप्रदा ॥ ३ ॥

मोहः ।

मोहः स्याद्विषयाज्ज्ञानमन्याय्येषु प्रवर्त्तकम् ।
अन्याय्ये यतमानानां क्रिया स्याद्विफला नृणाम् ॥१॥

कार्य्यासिद्धौ भवेद् द्वेषः द्वेषाद् दुःखं प्रजायते ।
तस्माद् विज्ञाततत्त्वः सन् क्रियार्थं यत्नमाचरेत् ॥२॥

मदः ।

शौर्य्यविद्याधनादीनां प्रभावैः स्वोच्चतामतिः ।
मद आख्यायते लोके यः करोति सदाऽन्धताम् ॥ १ ॥
मदान्धतमसे मग्नः सर्वसत्त्वघृणाकरः ।
अचिरेणैव कालेन लोकैरुत्याज्यते बलात् ॥ २ ॥
न दासः प्रीतिमायाति न बंधुः स्वाहिते रतः ।
मदान्धो जगतां शत्रुरचिरेणैव नश्यति ॥ ३ ॥

मात्सर्य्यम् ।

मात्सर्य्यं द्वेषसंदृष्टिर्गुणेष्वपि सदात्मनाम् ।
मात्सर्य्येषु प्रसक्तानां सतां सङ्गः सुदुर्लभः ॥ १ ॥
सर्वदा तापसंयुक्ता मत्सरादुष्टचेतसः ।
सतामुद्वेजका भूत्वा लभन्ते दुःखसञ्चयम् ॥ २ ॥

कामादिपालनम् ।

कामादयो जगन्मूलं विनामूलं कुतो जगत् ।
कामादीनामनायत्या तस्माद् दास्यं शरीरिणाम् ॥१॥
यावता स्वेष्टसिद्धिःस्याद् दुःखाघातो न दारुणः ।
तावद् विज्ञाततत्त्वेन साधनीयं प्रयत्नतः ॥ २ ॥

व्यभिचारदोषः ।

यावत् क्लेशकरा दोषा वर्त्तन्ते प्राणिनामिह ।
व्यभिचारसमः कश्चिन्न दोषो जगतीतले ॥ १ ॥
द्यूतं चौर्य्यं निष्ठुरत्वमालस्यं पापचित्तता ।
सुरापानं दुराचारो दुष्टसङ्गः सदामयः ॥ २ ॥
दुष्कुलत्वं सर्व्वनाशो विश्वासात् प्रच्युतिस्तथा ।
स्वजनेन सहाप्रीतिर्व्यभिचारेऽखिलस्थितिः ॥ ३ ॥
श्रोत्रियोऽपि कुलोत्पन्नः शतमित्रः सहस्रदः ।
तृणवल्लघुतामेति केवलं व्यभिचारतः ॥ ४ ॥
लोकोत्तरचमत्कारं दर्शयन् मादयन् सदा ।
तरुणान् कुरुते दासानन्धान् कृत्वा स्वमायया ॥ ५ ॥
य एष व्यभिचाराख्यो दोषः सर्व्वविनाशकृत् ।
स एष कामचण्डालप्रियपुत्रो भयङ्करः ॥ ६ ॥
व्यभिचारप्रसक्तानां विषामृतनिषेविणाम् ।
विसृज्य सकलं कार्य्यं नियतं रतिकामना ॥ ७ ॥
तत्कार्य्यसिद्ध्यै मद्यादेर्मांसादेश्चोपयोगिता ।
यन्नित्यं वर्द्धयेत् कामं दुष्टशर्म्मविवर्द्धनम् ॥ ८ ॥
धनं नश्यति भोगेन कार्य्यद्वेषः प्रजायते ।
स्वजना द्वेषमायान्ति कुलं दुष्कर्म्मतत्परम् ॥ ९ ॥
स्त्रियश्च व्यभिचारिण्यस्तिरस्कारः पदे पदे ।
दुष्टैः सङ्गः सदौद्धत्यं व्यभिचारात् प्रजायते ॥ १० ॥

धननाशे त्यजेद्वेश्या या पुरा प्राणतोऽधिका ।
दुराचारस्य दीनस्य भिक्षाऽपि भुवि दुर्लभा ॥ ११ ॥
द्वारे द्वारे सुता दारा भ्रमन्त्यवमताः सदा ।
अथवा दारुणै रोगैर्विनाशः क्लेशसञ्चयात् ॥ १२ ॥

स्वदारसेवागुण. ।

स्वदारनिरतानान्तु कान्तिर्लक्ष्मीः करेस्थिता ।
मोदते च कुलं नित्यं सन्तानैः कुलभूषणैः ॥ १ ॥
पतिश्चेदेकभार्य्यः स्याद् भार्य्याप्येकप्रिया भवेत् ।
परस्परभवा रक्तिरद्वैतं जनयेत् सुखम् ॥ २ ॥
पतिर्यत्नाच्चिनुयाद् यत् तद्रक्षेदादरात् प्रिया ।
यत्नतो रक्षितं द्रव्यं न कालात् क्षयमर्हति ॥ ३ ॥
सर्व्वदा प्रियसम्भाषः सर्व्वदा प्रियदर्शनम् ।
सर्वदा प्रीतिसम्वृद्धैः क्रृतिः स्यादान्तरी द्वयोः ॥ ४ ॥
न विवादो नच क्रोधो न शाठ्यं नच संशयः ।
सर्व्वदैव प्रसादे श्रीर्दम्पत्योर्वसति द्वयोः ॥ ५ ॥
जनानुरागो धर्म्माप्तिर्विश्वासो देहपोषणम् ।
न रोगो नाप्यनाचारो दम्पत्योरनुरक्तयोः ॥ ६ ॥
अरण्यमपि सम्प्रीत्यै भिक्षाऽपि सुखदायिनी ।
स्वदारनिरतानां तु लम्पटस्य कुतः सुखम् ॥ ७ ॥
एकाधिकाह्लादपूर्त्तौ शक्तिर्वा व्यापदागमे ।
एकाधिकपरिग्राही भजेतान्यां न केनचित् ॥ ८ ॥

अन्ययोः परकीयायां संसक्तानां दुरात्मनाम् ।
निष्कृतिर्नेह नामुत्र मृत्युशङ्का पदे पदे ॥ ६ ॥
तत्रापि कुलनारीणामबुद्धीनां चलद्दृशाम् ।
वञ्चयन् धर्म्मसंहर्त्ता दुरात्मा ह्येक उच्यते ॥ १० ॥
हठेन पशुबुद्धीनां चेतः संलोभ्य पामराः ।
निक्षिपन्ति महादुःखे कालतो गतयौवनाः ॥ ११ ॥
अनिवार्य्यरिपोर्वेगाद् यदि स्याद् दुष्क्रियारतिः ।
कृत्वापि यत्नतः पश्येन्नित्यं तत्र गुणागुणौ ॥ १२ ॥
विवेकाद् यदि दर्शी स्यात्तत्र दोषस्य नित्यशः ।
अवश्यं सन्त्यजेत् कालादन्यथा स्यादधोगतिः ॥१३॥
यावान् गुणकरोपायः सर्व्वो ह्येष्यस्तदा भवेत् ।
स्वभावादस्य दुःशत्रोरन्धता स्यात् शरीरिणाम् ॥१४॥
प्रायशस्तादृशी वृत्तिर्निमज्जयति पातके ।
तस्मान्नित्यं भाविभूतौ गुणदोषौ विचारयेत् ॥ १५ ॥
धिक्कारं सततं कुर्य्यादात्मनः पापकारिणः ।
कुर्य्याच्च साधुवृत्तीनां सङ्गं दुःसङ्गवर्ज्जितः ॥ १६ ॥
शतदोषपरीतस्य यदीन्द्रियवशीकृतिः ।
वह्नाविव तृणौघानां दोषाणां दहनं क्षणात् ॥ १७ ॥
एवं तत्त्वेन विज्ञाय साधुवृत्तिं समाश्रयन् ।
दुष्टां तां त्यक्तुमीशः स्यादन्यथास्यादधोगतिः ॥१८॥

वृत्तिप्राबल्यम्।

या या वृत्तिर्यदोत्पन्ना सा चेतोवशकारिणी।
तदोत्पादयति प्रीतिं प्रवर्त्तयति तत्कृतौ॥ १॥
उत्तमास्वाऽधमास्वान्यां सा द्वेष्यत्वेन दर्शयेत्।
स्वभावसिद्धो जन्तूनां भाव एष सनातनः॥ २॥
साहि वृत्तिर्विनष्टा चेत् पुनरन्यावभासते।
नवा सैव प्रिया भूत्वा तां प्रियां द्वेषयेत् तथा॥ ३॥
अत उत्पादमात्रेण नवृत्तेर्दासतां चरेत्।
स्वभावमवलोक्यैषां वर्ज्जयेद्वाऽभिवर्द्धयेत्॥ ४॥
स्वभावदर्शनं चास्यास्तदा पूर्व्वं परत्र वा।
दुष्करं स्यात्तदासक्तैरेषा सम्मोहिनी सदा॥५॥
पूर्व्वं स्वलाभसम्मोहस्तदा स्वामभवान्धताम्।
पुनः स्मृत्यालभ्य मोहमुत्तरं वर्द्धयेत् तु सा॥ ६॥
कदाचिदप्यन्यवृत्तिर्न चित्तेषूपजायते।
एकवृत्त्यागमे यादृग् ज्योतिरग्स्वनलो हिमम्॥ ७॥
कदाचिद् यदि जायेत न तिष्ठति चिराय सा।
स्थिताचेत् त्रिचतुर्मात्रा न फलाय प्रकल्प्यते॥ ८॥
विपक्षस्याधिकारेषु कः पुनः स्थातुमर्हति।
तिष्ठन्नपि न जीवेत कः समर्थः फलार्ज्जने॥ ९॥
यद् दृष्टं तत्र लोभःस्यात् तच्चेष्टा तत्फलोदयः।
तन्नाशः पुनराप्तेच्छा पुनर्भोगः पुनः फलम्॥ १०॥

वृत्तिसंस्कारचक्रेषु भ्राम्यतां सततं नृणाम् ।
वृत्तेर्वृत्त्यन्तरोत्पत्तिः कथं स्याद् विषयैषिणाम् ॥११॥
कथमेवं समुद्भूतिः को वक्तुं शक्तिमान् भवेत् ।
यस्मादुत्पद्यते विश्वं सोऽस्या द्रष्टा न चापरः ॥१२॥
तथापि दृश्यते लोके सतां सङ्गे शुभोदयः ।
तस्मात् सर्व्वप्रयत्नेन स कार्य्यः शुभमिच्छता ॥१३॥
विषयः कण्टकासङ्गी नान्यचारोऽस्ति देहिनाम् ।
तत्सञ्चारे भवेदेव चरणं कण्टकक्षतम् ॥ १४ ॥
तस्मात् परिचरादासां न शान्तिर्गृहमेधिनाम् ।
औदास्यादेव शान्तिः स्यात् किम्वान्तरनिरीक्षणात् ॥
अन्तर्विज्ञानसद्भावे तुच्छा स्याद् विषये रतिः ।
तस्मादान्तरवीक्षार्थं प्रयतेत समाहितः ॥ १६ ॥
सुखे वा दुःखहानौ वा सङ्कल्पी स्यात् क्रियापरः ।
सङ्कल्पानां हेतुकार्य्ये तस्माद् वीक्षेत यत्नतः ॥१७॥
तद्दर्शनसमर्थानाममार्गे न भवेद् गतिः ।
मार्गे प्रचरतां लोके क्वास्ति दुःखस्य सम्भवः ॥ १८ ॥
अन्तर्वृत्तिपरो नित्यं भोक्ता सकलसम्पदाम् ।
तथापि नैव वध्यः स्याद् दुःखैर्विषयसम्भवैः ॥ १९ ॥
न शठो वञ्चने शक्तो न पापः पापवर्द्धने ।
न चौरो हर्त्तुमीशः स्यादन्तर्वृत्तिविलोकिनाम् ॥२०॥

लोकदर्शनम् ।

विभज्य जगतीलोकान् क्रियाव्यवहृतादिषु ।
क्रियादेः फलहेतूनां क्रमाद् भावं विलोकयेत् ॥१॥
कथं साध्यं कथं बाध्यं किं कुर्य्यात् किं विधास्यति ।
किमकार्षीदिति प्रेक्ष्य बलाबलविचारणा ॥ २ ॥
साधने धनरत्नादेः साध्यतामवलोकयन् ।
तत्कारिणां बुद्धिबले विजानीयात् समाहितः ॥३॥
क्लिष्टानां साधने बुद्धिं बहुदर्शनभाविताम् ।
तथान्यूनांन्यूनदृष्टिं विजानीयादिति क्रमात् ॥ ४ ॥
जिज्ञास्य व्यवहारादीन् क्रमाद् भावानुसारतः ।
आवापोद्वापविधिज्ञा स्थिरं कुर्य्याज्जनाशयम् ॥ ५ ॥
तत्तदासङ्गिनां श्रीगैर्मैत्रयेत् तत्त्वदर्शनः ।
शिक्षयापि वदेदात्मा क्रियातोऽधिकचेष्टितम् ॥ ६ ॥
ततः स्वकार्य्यमालोक्य तत्कार्य्यमवलोकयन् ।
स्वकार्य्यें तत्कार्य्यपाते तं विद्यात् कार्य्यसाधनम् ॥
स्वकार्य्यमतिसम्बाध्य भवेद् यो बहुदर्शनः ।
तं सादरं सहागत्य वशयेन्न्यायवर्त्मना ॥ ८ ॥
दरिद्रः सेवया भक्त्या धनवान् सुखसाधनैः ।
प्रभुर्गांभीर्य्यसम्प्रीत्या यथालाभं समाश्रयेत् ॥ ९ ॥
एवं विज्ञाय तत्त्वेन हिताहितकरीं क्रियाम् ।
साधयेन्मानवैः प्रीतिं क्रमादुन्नतिमाश्रयन् ॥ १० ॥

क्रोधफलम् ।

एवं क्रोधो दुराचारो जातः पापकरो भवेत् ।
यश्चात्मानं धनैर्मानैः क्षणान्नाशयितुं क्षमः ॥ १ ॥
यस्मिन् क्रोधे पराभूतिः समता वोपजायते ।
तस्मिन् शान्तिर्विधातव्या न तस्य वशतां चरेत् ॥२॥
नाक्रोधनस्य वीर्य्यं स्यात् तस्मात्तं पालयेत् तथा ।
येनात्मनो हानिरल्पा वृद्धिर्निष्कण्टका भवेत् ॥ ३ ॥
आत्मदोषेण विद्वेषो जनानां यत्र जायते ।
तत्र क्रोधपरीहारः कार्य्यो न्यायानुसारतः ॥ ४ ॥
व्यर्थविद्वेषकारी चेन्न शाम्यः शान्तवृत्तिभिः ।
तमाततायिनं मत्वा दण्डयेदविचारयन् ॥ ५ ॥
दारहारी वृथाद्वेषी धनहर्त्ता विषप्रदः ।
अग्निदः शस्त्रसङ्घाती तथा वृत्त्यपकर्षकः ॥ ६ ॥
एवं रिपोर्दोषगुणौ दृष्ट्वा सम्प्राप्तचेतनः ।
कुर्य्यात् कार्य्यं प्रयत्नेन यदीच्छेत् शुभमात्मनः ॥ ७ ॥

शान्तिफलम् ।

नास्ति शान्तिसमा वृत्तिः प्राणिनां सुखदायिनी ।
तस्मान्नित्यं तदर्थाय यत्नं कुर्य्यात् समाहितः ॥ १ ॥
शान्त्या सर्पो न दशति शान्त्या शत्रुः प्रसीदति ।
मनुष्यः शान्तिमात्रेण गृहस्थोऽपि मुनिर्भवेत् ॥ २ ॥
किन्त्वेषा कठिना वृत्तिः सहसा नैव साध्यते ।
सर्व्वथाऽपि न संसेव्या गृहस्थैः सर्व्वदाभयैः ॥ ३ ॥

सामान्यतोगार्हस्थ्यनियमः।

प्रतिवेशिजनैर्नित्यं कुर्य्यात् प्रीतिमकण्टकाम् ।
स्वजनादपि तान् विद्यादधिकक्षेमकारिणः ॥ १ ॥
हत्वा निष्कृतिमायाति भवेद्भृत्वापि निर्भयः ।
प्रतिवेशिजनप्रीतो न कां वाधां समुत्तरेत् ॥ २ ॥
व्यवहारेषु नियतं सत्यवृत्तिं समाश्रयेत् ।
व्यवहारात् प्रच्युतानां लोकयुग्मं विनश्यति ॥ ३ ॥
विभूत्या सदृशं कुर्य्यात् कार्य्यं नाधिकमाचरेत् ।
स्वसामर्थ्यमतिक्रम्य वर्त्तते यः स नश्यति ॥ ४ ॥
प्रोत्साहयन्तो वहवः कार्य्येषु कपटान्तरः ।
पश्चात् तदेव निन्दन्ति दृष्ट्वा विच्युतसम्पदम् ॥ ५ ॥
सम्पत्तौ वहवो लभ्या बान्धवाः प्रियकारिणः ।
विपत्तौ यः प्रियस्तिष्ठेद् बान्धवोऽसौ सुदुर्लभः ॥६॥
विपत्तिर्मैत्री कल्याण परीक्षायां समाहितैः ।
राजद्वाररणक्षेत्रविप्लवादिस्तथा मता ॥ ७ ॥
विपत्तौ कषपाषाणे या मैत्री शुद्धिमर्हति ।
सैवादेया प्रयत्नेन चिरकल्याणमिच्छता ॥ ८ ॥
विनयः सर्व्वसत्त्वानां वशीकारे महौषधम् ।
विनयेन परीतानां नाहितं वर्त्तते क्वचित् ॥ ९ ॥
विनयाख्यं महारत्नं यं भूषयति नित्यशः ।
को न तं मानयेन्नित्यं शिरसा कृतपूजनम् ॥ १० ॥

नदीतीरे महाक्षेत्रदेशे स्वजनसन्निधौ ।
निवासः शुभदः पुंसामन्यथा स्यादधोगतिः ॥ ११ ॥
नगरे प्राप्तबुद्धीनां व्यवहारः प्रशस्यते ।
ग्राम्या नगरसम्बन्धविपन्नाः स्युः क्षणादिह ॥ १२ ॥
देशाटनं सतां मैत्री वेश्यागेहो नृपालयः ।
बहुशास्त्रेषु चाभ्यासश्चातुर्य्याय प्रकल्प्यते ॥ १३ ॥
प्रिया भार्य्या सुतो वश्यो मित्राणामनुकूलता ।
अर्थप्राप्तिररोगित्वं नाल्पस्य तपसः फलम् ॥ १४ ॥
धर्म्मशाठ्यं सुहृत्क्रौर्य्यमविश्वासो महात्मनाम् ।
अभिमानो विना मूलं कलहः कारणं विना ॥ १५ ॥
वचोऽस्थैर्य्यमसन्तोषः पापासङ्गः स्वतन्त्रता ।
वृथाद्वेषो व्यर्थकर्म्म मानवानां विडम्बना ॥ १६ ॥
सततं गोपयेद् यत्नादात्मानं क्षेमकामुकः ।
आत्मप्रकाशी लोकेषु तृणवल्लघुसंस्थितिः ॥ १७ ॥
किमप्यद्भुतमालोक्य न मोहं सहसा चरेत् ।
बहवो वञ्चकाः स्वार्थं नानाकौशलसाधनाः ॥१८॥
नियमात् स्थापयेत् किञ्चित् प्राप्तानां क्लेशभागपि ।
कदाचिदपि कालेषु दास्यादन्नं सुदुर्लभम् ॥ १९ ॥
लालयेत् पञ्चवर्षाणि दशवर्षाणि ताड़येत् ।
प्राप्ते तु षोड़शे वर्षे पुत्रं मित्रवदाचरेत् ॥ २० ॥

विषयाग्निप्रमुग्धानां पुत्राणां ताड़नं विषम् ।
दर्शयंस्तत्र सन्मार्गं शनैर्वोधं समर्पयेत् ॥ २१ ॥
गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य न्याय्यो दण्डो विधीयते ॥ २२ ॥
वयःस्था कामिनी नित्यं रक्षणीया प्रयत्नतः ।
कस्यापि हस्ते विश्वासो न कर्त्तव्यो रहः पदे ॥ २३ ॥
सर्वदा गृहकार्य्येषु नियुञ्जीत स्त्रियं सुधीः ।
श्रावयेत् सततं धर्म्मं रोषयेन्न कदाचन ॥ २४ ॥
मित्रं स्वच्छतया भक्त्या गुरून् दासान् प्रयत्नतः ।
सेवाभिः स्वामिनं नित्यं वशयेन्मतिमान् जनः ॥ २५ ॥
वस्त्रपूतं पिवेत्तोयं दृष्टिपूतं पदं क्षिपेत् ।
वाक्यपूतं चरेत् कार्य्यं मनःपूतं समाचरेत् ॥ २६ ॥
नैकाकी शयनं कुर्य्यादमन्त्री न चरेत् क्रियाम् ।
शतस्वार्थाभिलाभेऽपि समाजं न परित्यजेत् ॥ २७ ॥
जात्यादेरुचिताचाराद् वृत्तिं नित्यं प्रसाधयेत् ।
नास्तीहामुत्र कल्याणं कदाप्युन्मार्गगामिनाम् ॥ २८ ॥
श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥ २९ ॥
एकाकी न चरेद्देशं समृद्धो धनसम्पदा ।
परीक्ष्य कार्य्यं कुर्व्वीत विदेशे नित्यशङ्कितः ॥ ३० ॥

गृहच्छिद्रं सदा गोप्यं स्वयशो न स्वयं वदेत् ।
विना तथ्यं किमप्यर्थं नोत्तरेण नियोजयेत् ॥ ३१ ॥
दोषं विज्ञाय कस्यापि न निन्दां सम्वदेत् क्वचित् ।
स्वकर्म्मवशगा लोका इति ज्ञात्वा स्थितिं चरेत्॥३२॥
सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् ॥ ३३ ॥
यो ध्रुवाणि परित्यज्य चाध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेवहि ॥ ३४ ॥
नाश्रयं विपुलं प्राप्य स्वाश्रयं न त्यजेन्नरः ।
विषवृक्षोऽपि सम्वर्द्ध्य स्वयंच्छेत्तुमसाम्प्रतम् ॥ ३५ ॥
न्यायमार्गं परित्यज्य दुराशां न समाश्रयेत् ।
न्यायान्नाशोऽपि भद्राय नान्यायाद् वृद्धिरिष्टदा॥३६॥
शतसञ्चययोगेऽपि नातःकार्य्यो व्ययः सदा ।
क्रमाद्विन्दुप्रपातेन न शून्यः स्याद् घटः किमु॥३७॥
नित्यं यत्नेन कुर्व्वीत कपर्द्दस्यापि सञ्चयम् ।
अणूनामपि संयोगात् क्रमात् पृथ्वी प्रजायते ॥३८॥
उत्पादकाले शष्याणां सञ्चयः शुभदो मतः ।
कपर्द्दान्तेऽपि संदृष्टिः कर्त्तव्या धनमिच्छता ॥ ३९ ॥
न ग्राम्योत्सवनाथः स्याच्छटानां नाधिपो भवेत् ।
न देवद्विजदेयानामाधिपत्यं समाचरेत् ॥ ४० ॥

दर्शयेत् फलितं कार्य्यं नोद्यमे चपलो भवेत् ।
शत्रोः शेषमृणाच्छेषं व्याधिः शेषं न रक्षयेत् ॥ ४१ ॥
आत्मवत् सर्व्वभूतानि परद्रव्याणि लोष्ट्रवत् ।
मातृवत् परदारान् यो लोकते स नरोत्तमः ॥ ४२ ॥
शरणागतरक्षासु दृढयत्नः सदा भवेत् ।
गृहे समागतान् प्रीत्या तोषयेद् द्विषतोऽपि च ॥ ४३ ॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सुनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ४४ ॥
स्वकर्म्मणा फलं नेतुं प्रयतेत समाहितः ।
न कस्मै कश्चिद्ददाति विनाकर्म्म फलार्पणे ॥ ४५ ॥
तथापि क्रियतां यत्नः सदा साधनमेलनैः ।
परस्परकृतो बन्धो लोकचक्रस्य नित्यशः ॥ ४६ ॥
अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः ।
स्वकार्य्यं साधयेत् प्राज्ञः कार्य्यभ्रंशो हि मूर्खता ॥ ४७ ॥
स्वाज्ञानाद्वा स्वदोषाद्वा दृश्यते विपदुद्भवः ।
तथापि मूढा जानन्ति स्वदोषं न कथञ्चन ॥ ४८ ॥
विपत्सु पतितं तस्मान्न परं निन्दयेत् क्षणम् ।
स्वात्मदोषं समालोक्य शमयेद् वर्द्धयन् गुणम् ॥ ४९ ॥
यावन्न शिक्षा सम्पन्ना तावद् बन्धून् प्रपोषयेत् ।
शिक्षितान् कर्म्मणा स्वेन योजयेन्निर्दयान्तरः ॥ ५० ॥

स्वभावाद् विषयप्राप्तिः सर्व्वदोषस्य कारणम् ।
कर्म्मणा लभ्यमाना सा बुद्धिवीर्य्यसुखप्रदा ॥ ५१ ॥
धनानामर्ज्जको यस्तु स जानाति धने भयम् ।
जन्मना लब्धसम्पत्तिः किं विद्याद् भोगतत्परः ॥५२॥
जन्मना लब्धसम्पत्तेः केवलं मूर्खता फलम् ।
ततो व्यसनिनो भूत्वा पतन्ति विपदर्णवे ॥ ५३ ॥
यदि दोषे प्रवृत्तिः स्यात् सङ्गदोषेण वा धिया ।
सलज्जः सभयो नित्यं फलं तस्य विचारयेत् ॥ ५४ ॥
यथाधिकारे युक्तो यस्तथा तेन प्रसाधयेत् ।
यथाधिकारी यो भूयात् स तथा यत्नतश्चरेत् ॥ ५५ ॥
स्वकुलोचितमाचारं महतास्वा स्ववान्धवान् ।
शिक्षयेत् सततं गेही राजा वा मुनिरेव वा ॥ ५६ ॥
कुलाचारो महाविद्या विशेषान्महतां कुले ।
नाविभूत्या महान् वंशः कथञ्चिदपि जायते ॥ ५७ ॥
यदि धारा प्रवर्त्तेत महद्भिरपि शिक्षिता ।
कदापि नैव कालेषु पुंसां सम्पद् विनश्यति ॥ ५८ ॥
सर्व्वदा स्वोत्तमो भक्त्या सेवनीयः प्रयत्नतः ।
महतां हि कृपापात्रं हीनोऽप्यायाति सम्पदम् ॥५९॥
स्वजातीन् वर्द्धयेन्नित्यं स्ववन्धून् परिपोषयेत् ।
जातिहीनस्य निर्वन्धोः सुखाशा लयमृच्छति ॥६०॥

गृहदाहे जलप्लावे मरकोपृत्सवे तथा ।
दुष्टेभ्यः स्वधनं रक्षेद् गृहमेधी प्रयत्नतः ॥ ६१ ॥
जात्याचारेषु लोकानां न विवादं वृथा चरेत् ।
अनादौ लोकचक्रेऽत्र स्वातन्त्र्यं नास्ति कस्यचित् ॥ ६२ ॥
आत्मोचितां क्रियां सर्व्वां धनैर्मानैः सुभाषणैः ।
व्यवहारैः सदा रक्षेद् जनेनान्येन सन्ततम् ॥ ६३ ॥

आशुकीर्त्तिकरोपायः ।

लोकमार्गमतिक्रम्य चमत्काराभिभाषणात् ।
उपपत्तिकृता सिद्धिर्विरोधोक्तिनिवारणात् ॥ १ ॥
अनुरक्तिर्यदा यत्र लोकानामुपजायते ।
तस्य सम्वर्द्धनं यत्नाद्धर्म्माधर्म्मसमन्वयात् ॥ २ ॥
प्रसिद्धगतसम्बन्धान्नवमार्गावलोकनात् ।
यतः स्वाच्छन्दिकीवृत्तिर्लोकानामुपजायते ॥ ३ ॥
प्रतिष्ठावर्द्धका एत उपायाः सत्वरं नृणाम् ।
वित्तसंसाधिका ख्यातिर्वित्तात् सर्व्वसुखोदयः ॥ ४ ॥
लोकमार्गाद्यतिक्रान्तौ यदि निन्दापरा जनाः ।
त उपेक्ष्या हिता ग्राह्याः स्वकार्य्यमनुपश्यता ॥ ५ ॥
न सर्व्वः कस्यचिच्छत्रुर्न वा मित्रं धरातले ।
स्वजनेषु कृतप्रीतिरहितं सन्त्यजेत् सुधीः ॥ ६ ॥
लोकोऽयं मूर्खभूयिष्ठस्तत्त्ववेत्ता रहःस्थितः ।
प्रायेण मूर्खा मुह्यन्ति चमत्कारावलोकनात् ॥ ७ ॥

तिष्ठन्तु पण्डिता दूरे स्वल्पा दीना मितोक्तय: ।
मूर्खाणां वञ्चनादेव ख्यातिरासिन्धुगामिनी ॥ ८ ॥
प्रवाहे वालिशा: प्राय: श्रेणिवद्धा: पतन्ति हि ।
मूर्खेषु देवभावस्य प्रकाश: सुलभो भवेत् ॥ ९ ॥
सम्बद्धो वाप्यसम्बद्धो य: स्यादाडम्बरो गिराम् ।
अन्तरा चेमसम्बन्धान्मूढान् सम्मोहयेद् वलात् ॥१०॥
अथवा लोककल्याणदर्शनात् स्वार्थसिद्धये ।
उद्यम: सत्यभावाद्यै: ख्यातिसंसाधको गुण: ॥ ११ ॥
महौषधं महाविद्या महासत्त्वं महाक्रिया ।
सर्वमेतन्मनुष्याणां सहसा वृद्धिकारणम् ॥ १२ ॥
बहूनां स्वस्य चापेच्छा जायते येन हेतुना ।
अधर्म्मो वापि धर्म्मो वा स विघ्नघ्निकरी नृणाम् ॥१३॥
धर्म्मात् सुखं सदा कालेष्वधर्म्माद् दु:खतो भयम् ।
यत्नं कुर्व्वीत मतिमान् तस्माद्धर्म्मस्य संग्रहे ॥ १४ ॥
अथवाऽयं वृथावादो यथा स्यात् प्रकृतेर्गति: ।
अनायत्या तथा लोका: प्रवर्त्तन्ते समुद्यता: ॥ १५ ॥
तथाप्येते यथावृत्ता भवेयु: प्रकृतेर्वशा: ।
तत्रापि मार्गं पश्येयुर्य: स्यात् सञ्चारमङ्गल: ॥ १६ ॥
प्रतिष्ठोदयसंरम्भे निस्पृहत्वमुदारता ।
दीनवृत्तिर्मिताहारोऽव्यभिचार: फलप्रद: ॥ १७ ॥

लोकातिगसमारम्भः साध्यश्चेत् फलदः क्वचित् ।
असिद्धौ बहुसन्तापो दृष्टारम्भं तदाचरेत् ॥ १८ ॥
प्रत्येकेऽस्मिन् समारम्भे बहुविघ्नः पदे पदे ।
तानतीत्य फलावाप्तिर्दुष्करा मूढ़चेतसाम् ॥ १९ ॥
ये यथावद् विनिर्म्मोकादूर्द्धं गन्तुं कृतोद्यमाः ।
यथा तथा विधानेन सफलास्ते नरोत्तमाः ॥ २० ॥
ये यथा भावसम्पन्नास्तांस्तथैव नियोजयन् ।
वर्द्धयन् लोककल्याणं वर्द्धते यः स बुद्धिमान् ॥ २१ ॥

शठवृत्तिः ।

वसनैर्भूषणैः सौम्याः किम्वा काषायरञ्जिताः ।
किम्वा विवसनाः शान्ताः किम्वा मन्त्रमहौषधैः ॥१॥
नानालिङ्गधरा लोके स्वोचितक्रिययोज्ज्वलाः ।
वञ्चयन्तो जनान् नित्यं साधयन्ति भवक्रियाम् ॥ २ ॥
विरलाः साधवो देवास्तिष्ठन्तोऽपि सुदुर्लभाः ।
स्थिरप्रज्ञा निरालम्वा निर्म्मोहा लोभवर्ज्जिताः ॥३॥
शठा अपि बहुभ्रान्तिं दत्त्वा साजात्यदर्शनात् ।
विज्ञायन्ते क्रमात् काले न दोषः स्याच्चिरागतः ॥४॥
दर्शनात् स्वल्पतो लाभाद् विषयाणामसाधनात् ।
जातकामः समालब्धुं नानोपायान् समाश्रयेत् ॥ ५ ॥
य उपाया निरावाधा धर्म्मार्थसम्पद्विवर्द्धकाः ।
विद्यावाणिज्यकृष्याद्यास्ते साध्याः श्रमबुद्धिभिः ॥६॥

अमो भोगस्य नैकत्र विरोधाद् वर्त्तते क्वचित् ।
भोगाभ्यं वीर्य्यवत्त्वेन दृष्टेरावरणं भवेत् ॥ ७ ॥
आभ्यादुपायसम्भ्रान्त्या तत् सौलभ्ये मतिं ददत् ।
शाठ्यवृत्तीराशुफला गृह्णाति स्वार्थसाधनः ॥ ८ ॥
आपाततः प्रियालापाः प्रियालोकाः प्रियङ्कराः ।
अन्तर्गरलसम्पन्नाः सर्व्वघातनतत्पराः ॥ ९ ॥
अतिसक्तो भवेच्चौरः स्पष्टतो दस्युघातकौ ।
स्वल्पसाधनसम्पन्नः स्यादल्पघाततत्परः ॥ १० ॥

खलवृत्तिः ।

स्वासाध्यत्वं सुखादीनांवीक्षमाणोऽन्यसाध्यताम् ।
अप्राप्तिजनिताद् दुःखादाहतः सञ्जिहीर्षया ॥ १ ॥
तन्मूलपरशर्म्मादि साधनाघातवाञ्छया ।
असमर्थो वृथावादाद् विघ्नकारी खलो मतः ॥ २ ॥
सर्व्वदा परहिंसार्थं नानाकल्पनतत्पराः ।
मिलनैर्बहुभिर्नित्यं जनयन्ति महद् भयम् ॥ ३ ॥
कुलजा निर्धना मूर्खा दरिद्रा व्यसने रताः ।
खला भूत्वा गृहस्थानां धनं गृह्णन्ति सर्व्वदा ॥ ४ ॥
संसारे स्थितवृत्तीनां को वा वारयितुं क्षमः ।
ये यथा सन्ति ते सन्तु तथारक्षात्मनो हिता ॥ ५ ॥
दृष्टितः प्रणतिं कुर्य्यात् मधुरेक्षणभाषणैः ।
तथापि न खलाः शान्तिं यान्ति कार्य्योचिता क्रिया६

दस्युादिवृत्तिः ।

उचिते साधने क्लेशं दृष्ट्वा कामावलोकनात् ।
तन्मोहान्धः शीघ्रवृत्त्या धनहारा हि दस्यवः ॥ १ ॥
एकाकी चेद् भवेच्चौरो मिलिता दस्युसंज्ञिताः ।
मूर्खा दासा विषयिणश्च्युतसाधनसम्पदः ॥ २ ॥
आरण्यपार्व्वताद्यास्तु च्युतचेत्तमतिक्रियाः ।
स्वभावाद् दस्यवश्चौरा जायन्ते देहपोषकाः ॥ ३ ॥
कदाचिदपि विश्वासं प्राणान्ते तत्र नाचरेत् ।
दया धर्म्मो मतिः प्रीतिः सख्यं शान्तिर्न दस्युषु ॥४॥
स्वभावस्यानिवार्य्यत्वाद् यदि दुष्टपथे गतिः ।
समाहितैः साधनीया दस्युचौरादिदुष्क्रिया ॥ ५ ॥
आश्रित्य दुस्तरं देशं क्रूरैः सङ्गं समाचरन् ।
यातप्रास्थानिकं मार्गं दृष्ट्वा दस्युत्वमाचरेत् ॥ ६ ॥
आहृत्य धनरत्नादि धनिनां भूभृतां तथा ।
ससङ्गी भोगसन्तृप्तो जनसंग्रहमाचरेत् ॥ ७ ॥
संगृह्य धनसङ्ख्यादि क्रमात् सञ्चितसाधनः ।
दुस्तरं देशमाक्रम्य साम्राज्यमपि साधयेत् ॥ ८ ॥
एवं चौर्य्यमपि श्रेयः चातुर्य्येण शरीरिणाम् ।
प्रायशः कृतविद्यानां चौर्य्यमेतत् सुसिध्यति ॥ ९ ॥

चतुरवृत्तिः ।

बहुसाधनसम्पन्नो महाप्रतिभयोज्ज्वलः ।
प्रत्युत्पन्नमतिर्धीरश्चतुरो गीयते जनैः ॥ १ ॥

चतुरस्य मतिर्नित्यं लोकावाधितसम्पदि ।
महाविघ्नं विना ह्येष न दोषं कर्त्तुमुद्यतः ॥ २ ॥
चतुरेण सहावासो बुद्धिं वर्द्धयतेऽनिशम् ।
तेन सङ्गं प्रकुर्व्वीत सदा यत्नेन बुद्धिमान् ॥ ३ ॥

वेश्यावृत्तिः ।

अप्राप्तपतिसंसर्गा पुरुषान्तरदर्शिनी ।
दीना वा ताड़िता लुब्धा दुश्चरित्रा भवेद् वधूः ॥१॥
यत् किञ्च कुरुते कार्य्यं वेश्या सन्तोषवर्द्धनम् ।
सर्वमेव धनाशाभिर्दर्शितं चान्तरं रहः ॥ २ ॥
धनदेऽपि च्युते तेन नास्या लज्जा दृशोरपि ।
सदा भोगोत्सुका क्रूरा राक्षसी सर्वनाशिनी ॥ ३ ॥
न कश्चिदस्ति वेश्यायाः प्रियो लोके धनं विना ।
कुलीनो रूपवान् वापि धनवान् वा बहुश्रुतः ॥ ४ ॥
चेदाशा जायतेऽन्यस्मादधिकप्राप्तिगोचरा ।
चिरपालकसन्त्यागे नक्षणं पक्षपातिता ॥ ५ ॥
शठो दस्युस्तस्करो वा किम्वा यश्चिरसंस्थितिः ।
कथञ्चिदपि संरक्तिस्तत्र नान्यत्र कुत्रचित् ॥ ६ ॥
न कश्चिदिह संसारे वेश्याया बन्धुरीच्यते ।
यावद् यौवनमेतस्यास्तावत् प्रियवचो नृणाम् ॥ ७ ॥
तत्रापि शाठ्यतो भोगः प्रार्थ्यतेऽखिलमानवैः ।
प्राप्तेऽवकाशे तन्नाशादपि कश्चिन्न शङ्कितः ॥ ८ ॥

एकाश्रयेऽपि यत्नेन प्रकुर्य्याद् धनसञ्चयम् ।
न कस्य प्रियया वाचा प्रीतिं कुर्य्याद्यथान्तरीम् ॥ ९ ॥

लम्पटवृत्तिः ।

सुखसम्प्राप्तविभवो गुरुसन्ताड़नोज्झितः ।
दुष्टासङ्गी भोगकामी लम्पटो जायते नरः ॥ १ ॥
निर्लज्जो नित्यनिर्भीको भोगमात्रसमुत्सुकः ।
वेश्यामूर्त्तिं प्रीतिमयीं सदा पश्यति चेतसा ॥ २ ॥
यावत्तिष्ठेन्निजायत्तं धनं तावत् प्रपूजयन् ।
चरमे द्यूतचौर्य्यादिक्रियासेवी विनश्यति ॥ ३ ॥
वधूर्वा भगिनी वापि तनया वा गुरुप्रजा ।
लम्पटस्य दृशोः प्रान्ते न काचित् परिह्रीयते ॥ ४ ॥
द्यूतं चौर्य्यं दुराचारो मिथ्यारोगः सुरादिकम् ।
अनौजस्यं तथा मौर्ख्यं सर्व्वं तिष्ठति लम्पटे ॥ ५ ॥
अनिवार्य्यैरिपोर्वेगात् सङ्गाद् वा दुष्टचेतसाम् ।
यदि जायेत लाम्पत्यं तदा न्यायपरो भवेत् ॥ ६ ॥
तोषयन् वचसा नित्यमन्तः शाठ्यं समाश्रयन् ।
मलवद् रेचयेद् वीर्य्यमनासक्तो ह्यसङ्गवान् ॥ ७ ॥
सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते ।
क्रोधाद् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः॥८॥
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ।
तस्मात् सलज्जः सभीतो निःसङ्गो दुष्क्रियां चरेत् ९

जड़वृत्तिः।

केषामपि च बौद्धानां साधनानामनीचकः।
बाह्यक्रियालब्धभोगो जड़ इत्यभिधीयते ॥ १ ॥
राजा वा मुनिपुत्रो वा दीनो वा बधजीवनः।
केवलं बाह्यसम्भोगी सर्वे मूढ़ा न संशयः ॥ २ ॥
वसूनां तारतम्येन लब्धालब्धविशेषता।
आत्मा विषयसंसर्गी सर्वेषामेकरूपता ॥ ३ ॥
यथैकस्य सुखं दुःखं कामक्रोधादयस्तथा।
तथा परस्य वित्तेथं नास्त्येषां भिन्नरूपता ॥ ४ ॥
सहसा क्रोधमायान्ति सहसा शान्तिमाश्रिताः।
बौद्धकौशलमात्रेण मुग्धा भ्रान्तिं भजन्ति च ॥ ५ ॥
बाह्यातिरिक्तवार्त्ताया न जानन्ति कथामपि।
दारपुत्राद्यात्मबुद्ध्या निमज्जन्ति सदा धिषु ॥ ६ ॥
परसम्पदमालोक्य चमत्कारधियां वशाः।
कार्य्याकार्य्यपरिज्ञानमूढ़ाः कायक्रियारताः ॥ ७ ॥
जीवन्मुक्तेऽपि विश्वासो नास्ति लिङ्गं विना वहिः।
बाह्यचिह्नावलोकेन दस्यूनामपि सेवकाः ॥ ८ ॥
चिरसंस्कारसम्बद्धाः पराज्ञावशवर्त्तिनः।
पराभिप्रायगन्धोऽपि नैषां चेतसि जायते ॥ ९ ॥
बाह्यानामविरोधेन य एषां फलसाधकः।
सहि सञ्चालयन्नेतान् लभते देवसम्पदम् ॥ १० ॥

गृहस्थवृत्तिः ।

लोकाविरुद्धमार्गेण कृषिशिल्पक्रियादिना ।
याज्येन विद्यया वापि निर्वाहो गृहमेधिनाम् ॥ १ ॥
स्वायत्ते स्वोचितद्रव्ये लब्धे प्राप्तव्यसेविनाम् ।
नीतिलज्जाभयादीनां दृष्ट्या प्रीतिः स्ववैभवे ॥ २ ॥
कामितेऽपि महाभोगे प्रवृत्तिर्नैव जायते ।
विषयो वासनाहेतुर्वासनाऽऽसक्तिसाधिका ॥ ३ ॥
आसक्त्या जायते चेष्टा चेष्टातः कार्य्यमुच्यते ।
कार्य्यस्य साध्यासाध्यत्वाद् गुणदोषोदयो भवेत् ॥४॥
असाध्ये सम्प्रवृत्तानां जायते क्लेशसञ्चयः ।
चौर्य्यात् शाठ्याद् दुराचाराद् द्यूताल्लोकविरोधिनः ५
साध्योपाये तथालब्धे विषये प्रीतिभागिनाम् ।
स्वकर्म्मनिरतानांतु गृहस्थानां सदा सुखम् ॥ ६ ॥
तस्मात् स्वासाध्यकार्य्येषु तथा भोगेषु वा पुनः ।
न दध्यान्मतिमात्मीयां य इच्छेत् शुभमात्मनः ॥७॥
विश्वास्याः सज्जना एते द्रुतं नान्यायकारिणः ।
लोकरक्षाकरा नित्यं धार्म्मिकाः कुलपोषकाः ॥ ८ ॥
एतेषु सुखदुःखानां तारतम्यप्रदर्शनात् ।
तारतम्यं विजानन् सन् व्यवहारं समाचरेत् ॥ ९ ॥
सत्सङ्गैः साधनप्रीत्या लोकानामुपकारकः ।
यः कालं धर्मभोगाद्यैर्हरत्येष महानरः ॥ १० ॥

न्पन्नधनिसद्वृत्तभेदादेषोऽनुमन्यताम् ।
अग्रणीयो माननीयस्तोषणीयः समाहितैः ॥ ११ ॥
एवं तत्त्वानुसारेण विश्वासप्रीतिपूजनम् ।
कृत्वा गार्हस्थ्यधर्मेण कालहारी महानरः ॥ १२ ॥
स्वधर्मे वान्यधर्मे वा नीचो वा विपुलोदयः ।
दरिद्रो वा धनी वापि सर्वे सद्वृत्तिशालिनः ॥१३॥
सर्वे स्वकर्मयोगेन कृसम्बद्धुरन्मुखाः सदा ।
कर्महीनस्य नैहास्ति गतिरामुष्मिकी तथा ॥ १४ ॥
यस्मिन् समाजे स्वावासो विधातव्यो जनैः सदा ।
तत्कर्म यत्नतो ग्राह्यं कर्म्म धर्म्म विदुर्बुधाः ॥ १५ ॥
यदि योगी त्रिकालज्ञस्तत्त्वदर्शननिर्भयः ।
तथापि स्वजनाचारं मनसापि न लङ्घयेत् ॥ १६ ॥

धनिवृत्तिः ।

नियमाद् व्यवहारार्थी साहङ्कारो दुरासदः ।
सदाऽवज्ञाकरः पुंसां मधुरैर्भाषणैरपि ॥ १ ॥
स्वबुद्धिसिद्धं सिद्धान्तं मन्यमानः क्रियापरः ।
स्वानुगे प्रीतिमापन्नो गुरौ वापि सुहृत्सु वा ॥ २ ॥
संकल्पविपरीतार्थं गुरुमप्यवलङ्घयेत् ।
कस्यापि तैक्ष्ण्यं लोकेषु न सहेत कदाचन ॥ ३ ॥
हीनभावेन लोकानां व्यवहारप्रियः सदा ।
नित्याविश्वाससंयुक्तो निर्भयो निर्दयान्तरः ॥ ४ ॥

सततं स्वसुखे मत्तो दम्भवान् कुटिलान्तरः ।
निरपेक्षो भोगमात्रे दृष्टिमान् लोकपालकः ॥ ५ ॥
स्वोपार्ज्जितफलोत्साही साहङ्कारो मदोद्धतः ।
कुलाभिमानी कुलजोऽद्वयो दम्भसमोदयः ॥ ६ ॥
एवं लोकेषु ये यत्र तत्र ते समवैभवाः ।
भोगानां तारतम्येन पुण्यापुण्यकथोज्ज्वलाः ॥ ७ ॥

पण्डितवृत्तिः ।

व्यवहारपराः केचित् केचित् तत्त्वसमुत्सुकाः ।
केचिदद्वयरूपाः स्युस्त्रिविधा विदुषां स्थितिः ॥ १ ॥
आद्याः स्वकर्म्मणा नित्यं जगतां कार्य्यसाधकाः ।
भुञ्जते विषयान् श्रेष्ठान् केवलं लोकदर्शनाः ॥ २ ॥
स्वबोधेषु लब्धसत्त्वा अलोकगतिवर्ज्जिताः ।
साहङ्कारा जगत्स्वास्थ्ये सर्व्वदा दत्तमानसाः ॥ ३ ॥
विफलारम्भविद्वेषाः स्वानुगे कृतमित्रताः ।
अन्यत्र जड़ताबुद्ध्या कृतद्वेषा दुराक्रमाः ॥ ४ ॥
धनानामर्ज्जनं रक्षां सुतादीनां प्रपालनम् ।
जानन्ति परमं श्रेयो बहिर्लोकानुगामिनः ॥ ५ ॥
पालकाः स्वाश्रितानाञ्च न्यायमार्गपरप्रियाः ।
बहुमान्याः सदारम्भा विश्वास्याः सत्यवृत्तयः ॥ ६ ॥
उचितचारसम्प्राप्तौ पक्षपातविवर्ज्जिताः ।
सदाविषयसम्पर्किचिन्ताचयपरायणाः ॥ ७ ॥

सुप्रसन्नाः सुसम्पन्नाः सदा गम्भीरभाषिणः ।
स्वल्पवादा अलोकार्थतत्त्वविश्वासवर्ज्जिताः ॥ ८ ॥
द्वितीया विषये दोषदर्शिनो रागवर्ज्जिताः ।
सदा धर्म्मपरोत्साहा धर्म्मकर्म्मपरायणाः ॥ ९ ॥
यथालाभेषु सन्तुष्टा लोकविद्वेषवर्ज्जिताः ।
सत्ये रताः शुभाशंसापूरितस्वान्तवृत्तयः ॥ १० ॥
तृतीया विफलारम्भा लोकवञ्चनतत्पराः ।
चिरसंस्कारदुर्वृत्ता वागाड़म्बरतत्पराः ॥ ११ ॥
साहङ्काराः स्वबोधेषु सदाच्छिद्राभिदर्शिनः ।
स्वोक्तरत्वादृढोत्साहाः सर्व्वदा सर्व्वदूषकाः ॥ १२ ॥
अतत्त्वलोका वाक्यानां विफलार्थप्रकल्पकाः ।
येन केन प्रकारेण पराभिभवकामुकाः ॥ १३ ॥
जगतां श्रैष्ठ्यमात्मीयं पश्यन्तो वादतत्पराः ।
तत्त्वातत्त्वविनिर्मोकात् सदा तर्कपरायणाः ॥ १४ ॥
स्थितेषु कृतविश्वासा नवीने दोषकल्पकाः ।
पवित्राचारसम्पन्नाश्चिरमार्गाभिगामिनः ॥ १५ ॥
विश्वास्याः पातकाद्भीताः सतां वृत्तिप्रदर्शकाः ।
भजन्ते विषयान् धर्म्म्यान् परत्र सुखकामुकाः ॥१६॥
निर्धनाः सततं लोभपराः क्रोधपरायणाः ।
दातुः कीर्त्तिकरा नित्यमदातुर्दोषगायकाः ॥ १७ ॥

सहसा कठिनालापाः स्वल्पलाभे बहुक्तयः ।
उक्तिभङ्ग्या च सततं स्वमहत्त्वप्रगायकाः ॥ १८ ॥
अभ्यस्तबहुवाक्याश्च धनिनां प्रियवादकाः ।
मानलाभे सुसन्तुष्टाः चणात् सन्तोषभागिनः ॥१९॥
व्यवहारपरा भूत्वा केचिद् विद्याभिमानिनः ।
एते दुरासदाः क्रूरा महादम्भसमन्विताः ॥ २० ॥
लुब्धाः स्वधनसम्प्राप्तौ सर्व्वकर्म्मपरायणाः ।
सर्व्वच्छिद्रकरा नित्यं धनविद्यामदोद्धताः ॥ २१ ॥
धर्म्माधर्म्मोभयोस्त्यक्तास्तेजोगाम्भीर्य्यदर्शिनः ।
हरन्ति धनिनां वित्तं वागाडम्बरतत्पराः ॥ २२ ॥
उक्तिमात्रेषु सर्व्वत्र हीनभावाभिलोककाः ।
महाविषयिणो नित्यं महाचारोचितक्रियाः ॥ २३ ॥
अविश्वास्याः सदाद्वेषजिगीषापूरितान्तराः ।
बहिर्बहुगुणालोकाः पाषाणहृदयाः खलु ॥ २४ ॥
केचिदेषु शान्तवृत्त्या मधुरालापतत्पराः ।
सर्व्वेषामनुरोधयुक्त्या बहुरञ्जनकोविदाः ॥ २५ ॥
विरोधिनि बहिःप्रीता युक्त्या सर्व्वार्थनाशकाः ।
स्वार्थस्यैवानुरोधेन परार्थपरिसाधकाः ॥ २६ ॥
नास्तिकाश्छन्नदुर्वृत्ता बहिःसद्वृत्तिशालिनः ।
भजन्ते विषयान् श्रेष्ठान् लोकेषु बहुमानिताः ॥२७॥

केचित् तत्त्वार्थसम्पन्ना व्यवहारपरा बुधाः ।
सदा कल्याणदाः पुंसां सदा धर्म्मपरायणाः ॥ २८ ॥
सुविश्वास्याः सुसंसेव्याः सर्व्वसद्गुणशालिनः ।
भुक्त्वा देहोचितं धर्म्यं लभन्ते गतिमुत्तमाम् ॥ २९ ॥
किन्त्वेते वञ्चिताः क्रूरैः स्वोचितार्थपराङ्मुखाः ।
लभन्ते प्रायशो दुःखं भजन्ते नापि सम्पदम् ॥ ३० ॥
अन्ये च बहवो दुष्टा विदुषां लिङ्गधारिणः ।
सदा दुष्कर्मणा स्वार्थं साधयन्ति भयङ्कराः ॥ ३१ ॥
यथा तथा सन्तु बुधा बुधा एव नचापरे ।
शतमूर्खपरित्यागादेकः सेव्यः सुखेप्सुना ॥ ३२ ॥
शतदुर्गुणसद्भावो यदि विद्वत्सु तिष्ठति ।
तथापि कश्चित् सम्प्राप्यो गुणस्तत्र शुभप्रदः ॥ ३३ ॥
कुत्रापि लब्धबोधेभ्यो नातिभीतिः प्रवर्त्तते ।
यथा तथा भवन्त्वेते लोकरक्षाकरा बुधाः ॥ ३४ ॥

सत्पुरुषवृत्तिः ।

अविद्या वा सद्विद्या वा धर्मभीता दयालवः ।
सर्वदा विहिताचारनिरता गुणलोभिनः ॥ १ ॥
सुविश्वास्याः प्रियालापाः परनिन्दापराङ्मुखाः ।
धर्म्यलाभसुसन्तुष्टा देवातिथिसमर्च्चकाः ॥ २ ॥
आश्रयार्हाः सदात्मस्था मानामाननिराकुलाः ।
सर्वदा लोककल्याणकामुकाः प्रियदर्शनाः ॥ ३ ॥

शत्रोरपि गुणोत्साहा महतामनुगामुका: ।
भवन्ति कुलजा: प्रायो विद्वांसो वा नरोत्तमा: ॥ ४ ॥

तत्त्वज्ञवृत्ति: ।

ये यथा कर्म्मसम्पन्नास्तेतथाफलसाधना: ।
इतिज्ञात्वा निरातङ्का निर्व्विरोधा निराकुला: ॥१॥
त्रिकालगतवृत्तान्तस्य सदा परिदर्शका: ।
देहोचितक्रियारक्ता अनासक्ता भवार्णवे ॥ २ ॥
सर्व्वदात्मनि सन्तुष्टा महासत्त्वा महोदया: ।
सततं तत्त्ववक्तार: प्रमादभ्रमवर्ज्जिता: ॥ ३ ॥
यथालाभसुसन्तुष्टा यथागमनिषेविण: ।
सर्व्वसंशयहर्त्तार: सर्व्वतत्त्वप्रभाषका: ॥ ४ ॥
मानापमानयोस्तुल्या लाभालाभसमेक्षणा: ।
महाविश्वाससम्पन्ना महासन्तापहारका: ॥ ५ ॥
शोकहीना निराकाम्या: सरला: कपटोत्तमा: ।
यथादयालवस्तादृक् क्रूरा भुवनरक्षणे ॥ ६ ॥
रिपूनपि गुणै: शान्तान् कुर्व्वन्त: सेविनो बलात् ।
गृहस्था अपि नि:सङ्गा नीतिधर्म्ममयोक्तय: ॥ ७ ॥
निर्दम्भा अतिदक्षाश्च सव्याजोपि स्थिरान्तरा: ।
अप्राप्यपरिहीनाश्च सदा सर्व्वार्थसिद्धय: ॥ ८ ॥
जायन्तेऽखिलतत्त्वानां दर्शनान्मुनयो नरा: ।
गृहस्था वा वनप्रस्था सन्यस्ता वा नराधिपा: ॥ ९ ॥

धनरक्षोपाय: ।

धनार्ज्जनस्य समये मतिरुल्लासिनी नृणाम् ।
तथैव दर्शयेन्नित्यं सौलभ्यं धनसञ्चये ॥ १ ॥
अर्ज्जको विपदो लेशं गणयेन्न कथञ्चन ।
तिष्ठत्यपि सदा विघ्ने धनागमविमोहित: ॥ २ ॥
तथैव सङ्गिनां लाभो येऽन्धा भोगसमुत्सुका: ।
स्वयं भोगमदोन्मत्त: पश्चात् किञ्चिन्न लोकयेत् ॥३॥
सुतादीनपि भोगान्धान् कुरुते मदमोहित: ।
येऽनभिज्ञा भोगमत्ता: सदा व्यसनतत्परा: ॥ ४ ॥
कालेन विपदां पाते स्वजनैर्हीनसाधना: ।
निमज्जन्ति महादैन्ये निरुपाया निराश्रया: ॥ ५ ॥
तस्मादर्ज्जनकालेतु यत्नात् कुर्व्वीत सञ्चयम् ।
शिक्षयेत् स्वजनान् नित्यं भोगमाननिरुत्सुक: ॥ ६ ॥
शिक्षिताना ममुग्धानां विपत्पातो न जायते ।
पातेऽपि पुनरुद्धारो जायते शिक्षितात्मनाम् ॥ ७ ॥
यावान् सञ्चयमार्गोऽस्ति तत्र भूमिचय: शुभ: ।
अन्येषां विपदो नित्यं भूमिरेषा चिरंस्थिरा ॥ ८ ॥
अन्यत्र शतलाभेऽपि सञ्चयेद् भूमिमादरात् ।
अन्याय्येनापि पण्येन नास्ति भूमिसमं धनम् ॥ ९ ॥
लब्धे समुचितान्नेतु विरमेत् तृप्तमानस: ।
चेदाशा रक्षयन् स्वान्नं पुनर्यत्नं समाचरेत् ॥ १० ॥

प्राप्ते धने तथा यत्नं न कुर्य्यात् तेन मोहितः ।
यन्नाशे सर्व्वनाशः स्यादिति नित्यं विचारयेत् ॥११॥
यावज्जीवं परायत्तं न कुर्य्यात् स्वधनं क्वचित् ।
भार्य्या सुतः सुहृद्वापि सर्व्वे स्वार्थपरायणाः ॥ १२ ॥

देवान्नसिद्धिः ।

अधीत्य विधिवद् विद्यामेकामपि सुशिक्षया ।
ब्रह्मचर्य्येण तपसा शोधितान्तः प्रसन्नधीः ॥ १ ॥
अबोधानां ग्रामिकाणां सदा दुःखेषु तिष्ठताम् ।
कल्याणाय निजश्रेयःकामुको ग्राममावसेत् ॥ २ ॥
लोकानां भीषणे स्थाने किम्वा सर्वाभितर्पिते ।
पवित्रं गृहमासेव्य देवाराधनतत्परः ॥ ३ ॥
अन्नेन शिक्षयंश्छात्रानतिथीन् परिपोषयन् ।
ग्रामिकाणां हितं कुर्व्वन् रक्षयन् विघ्नजाततः ॥४॥
निर्व्याजेन सतामन्नं गृह्णन् निर्विण्णमानसः ।
लोकानामधिपो देवो भूत्वा पृथ्वीहितं चरेत् ॥५॥
बहवो लम्पटा दुष्टा भोगसाधनतत्पराः ।
बञ्चयन्ति गृहस्थानां चेतांसि नरराक्षसाः ॥ ६ ॥
लिङ्गिनो ग्रहवेत्तारः सिद्धाः षट्कर्मतत्पराः ।
विभागे प्रायशो ह्येषां चिह्नं विद्या कुलं वयः ॥ ७ ॥
देवत्वं यदि लभ्येत तदा रक्ष्यं प्रयत्नतः ।
अर्ज्जनाद्रक्षणं दुःखं तत्र विघ्नोदयो महान् ॥ ८ ॥

यावल्लोकेषु सामान्यस्तावल्लोका न लोकका: ।
प्रवृद्धे दृष्टिसम्पात: सकृत् सर्वस्य जायते ॥ ९ ॥
सदा छिद्रपरा लोका: सदा दुश्चेष्टिते रता: ।
कल्पयन्ति सदा कर्म्म तस्य विघ्नकरं जना: ॥ १० ॥
तस्माद् दुरासदो भूत्वा सर्व्वाच्छादकरौजसा ।
लभेत देवसम्पत्तिं यथा राज्यं तथैव सा ॥ ११ ॥

आपत्कर्त्तव्यम् ।

तत्र विप्लवे ।

प्रवृत्ते समरे घोरे राजभङ्गे त्वराजके ।
शठतस्करदस्य्वाद्या: प्रवृद्धा: स्युर्भयङ्करा: ॥ १ ॥
हरन्ति गृहिणां वित्तं दारान् मानं कुलं तथा ।
तस्मात् तदानीं संरक्षा कर्त्तव्यातिप्रयत्नत: ॥ २ ॥
सर्व्वै: शस्त्रधरैर्भूत्वा प्राणदानकृतोद्यमै: ।
यथावीर्य्यं यथाबुद्धि यतनीयं स्वरक्षणे ॥ ३ ॥
क्रूरा: शान्त्या न शाम्यन्ति तस्मात् क्रूरत्वमिष्टदम् ।
दारमानधनादीनां नाशे किं जीवनैर्नृणाम् ॥ ४ ॥
तस्मादनागते क्षोभे पुरा सर्व्वै: सुखार्थिभि: ।
रक्षणीयं बलं शस्त्रं साहसं गृहमेधिभि: ॥ ५ ॥
चञ्चलेयं चलादेवी नित्यं नवनवैषिणी ।
कटाक्षयति तारुण्यवीर्य्यसाहाय्यभूषितम् ॥ ६ ॥

सुखेन पालितैः सर्व्वैर्यदि शस्त्रादिभूषितैः ।
दूरेऽस्तु स्वधनादीनां रक्षा राज्यं सुरक्ष्यते ॥ ७ ॥
तस्माद्राज्ञापि कर्त्तव्या दृष्टिरत्र शुभावहा ।
परस्परकृतप्रीतिस्थिरशर्म्मविवर्द्धिनी ॥ ८ ॥
अथवा निर्भये राज्ये गच्छेत् स्वजनरक्षितः ।
महाधनं समागृह्य भूम्यामन्यत् प्ररोप्य च ॥ ९ ॥
दुर्निवार्य्यासु तीक्ष्णासु राजसैन्याभिभूतिषु ।
प्रपद्य शरणं कुर्य्यात् तेषामनुमतां क्रियाम् ॥ १० ॥
न राजा स्वाश्रितानान्तु प्रजानां नाशकः क्वचित् ।
प्रजानाशे कथं राज्यं भोक्तव्यं स्यान्महीभृता ॥ ११ ॥

प्रायणे ।

येषां यत्र सुखाशाऽऽस्ते तन्नाशे ते महाकुलाः ।
कर्त्तव्यज्ञानशून्याः स्युः स्वात्मरक्षापराङ्मुखाः ॥ १ ॥
वृद्धालोकैर्बहुप्रज्ञैः स्वजनैः सत्त्ववृत्तिभिः ।
सन्तोष्या बालकाः प्रेम्णा परे शान्तिप्रदर्शनैः ॥ २ ॥
अवितर्क्योदयो लोकस्तथानाशस्तथास्थितिः ।
गतं यत्नशतेनापि न लभ्यं स्यात् कथञ्चन ॥ ३ ॥
एवं फलमुखैर्वाक्यैर्मुनिभिः परिचोदितैः ।
भोजनैः शीतलैः स्पर्शैः शमनीयाश्च बन्धुभिः ॥ ४ ॥
शोकसञ्चारिणि प्राणे महानग्निः प्रवर्द्धते ।
तावेतौ मिलितौ नृणां कुरुतः प्राणसंशयम् ॥ ५ ॥

अत्रापि दुष्टवृत्तीनामवकाशः प्रजायते ।
तस्मादग्रे स्ववस्तूनि रक्षणीयानि यत्नतः ॥ ६ ॥

ग्रामविधिः ।

य इच्छेद्धनवानात्मपरमक्षेमसाधनम् ।
ग्रामान् संस्थापयेद् यत्नाल्लोकतत्त्वावलोकनात् ॥१॥
केनात्मसहचारित्वं लोका वाञ्छन्ति सर्व्वदा ।
तद्भावमभिसम्वीक्ष्य ग्रामान् संस्थापयेत् सुधीः ॥२॥
नदीतीरे महामार्गे नीचानामभिमध्यगे ।
अथवा विपिनप्रान्ते मूढाकीर्णेऽथवा पदे ॥ ३ ॥
तत्रत्यानां देहयात्रानिर्वाहे दीप्तबोधताम् ।
अभिबोध्य गुरोः पार्श्वे वसेद् धर्म्मपरायणः ॥ ४ ॥
मध्ये च महति क्षेत्रे सर्व्वाकारसमन्विते ।
मरौ संस्थाप्य वासांसि क्षेत्रं सन्दोहयेत् सदा ॥ ५ ॥
फलैः पुष्पैस्तृणैः शष्यैरन्नैर्दासाधिवेशितम् ।
वहिः शष्यैः पार्श्वफलैर्यथास्थानं सुशोभितम् ॥ ६ ॥
सर्व्वेषां प्रीतिदं देवपाणिस्थानादिरञ्जितम् ।
दासनापितगोपालरजकादिसमन्वितम् ॥ ७ ॥
ज्ञातिबान्धवधर्म्मज्ञवणिक्पश्वादिवासितम् ।
यावदावश्यकं लोके देहिनां देहधारणे ॥ ८ ॥
स्वधनैस्तावदापाद्य प्रेम्णा लोकान् निवासयेत् ।
आत्मीयानपि तत्रैव दत्वा बहुपदान्यपि ॥ ९ ॥

सन्निकृष्टेजनैर्नित्यं चक्षुष्मान् ऋणदानकैः ।
प्रेम्णा सद्वृत्तिदानेन व्यवहारं शनैश्चरेत् ॥ १० ॥
अथवा चेत्त्रिभिः कुर्य्याद् वणिग्भिर्वाऽखिलैर्जनैः ।
यथावृद्धि चरंस्तत्त्वं क्रमादाक्रमको भवेत् ॥ ११ ॥
यथा कुलं यथा विद्या यथा द्रव्यं यथा क्रिया ।
तथैव फलदः पुंसामेष मार्गः सनातनः ॥ १२ ॥
धनिनो ज्ञाततत्त्वानामुपदेशेन साधयेत् ।
ज्ञाततत्त्वो वीक्ष्य कुर्य्यात् कालात् साम्राज्यसम्पदम् १३

धर्म्मसेवा ।

नानाफलं क्रिया नाना नानासाधनसाधितः ।
विरुद्धात्मा दुरुल्लङ्घ्यो धर्म्म एष सनातनः ॥ १ ॥
पालनीयः प्रयत्नेन सदा कुशलकामिभिः ।
धर्म्महीनस्य नैवास्ति गतिरत्र परत्र वा ॥ २ ॥
विद्वेषस्त्वा विरोधस्त्वा मोहस्त्वा त्यज्य धीमता ।
जगच्चक्रसमालोकात् क्रियते धर्म्मसेवनम् ॥ ३ ॥
प्रतिज्ञां यदात्मीयं येन येन प्रलभ्यते ।
को भोक्ता कुतएवैतत् कः संसर्गः किमागमः ॥ ४ ॥
केन वा क्रियते कस्मै दुर्विज्ञेयो दुराक्रमः ।
लोक एष चिरावृत्तो नानारसकरः सदा ॥ ५ ॥
फलानियमसंदृष्ट्या पुरुषार्थप्रसाधनैः ।
तत् केनापि स्थिरीकर्त्तुं शक्यं न फलसाधनम् ॥६॥

इमामालोक्य मुनिभिर्जगतां गतिमद्‌भुताम् ।
कार्य्यमात्रे धर्मसेवा विहिता तत्त्ववेदिभिः ॥ ७ ॥
यथादेशं यथासात्म्यं यथाभावं यथोदयम् ।
धर्म्ममार्गो महानेष साधितः सत्त्ववृत्तिभिः ॥ ८ ॥
आपत्काले सहायोऽसौ सम्पदि प्रियबान्धवः ।
व्यवहारस्य जनकः सर्वशर्म्मसुसाधकः ॥ ९ ॥
सर्व्व एव शुभो धर्म्मो न कश्चिदवमन्यताम् ।
एकलक्ष्यगताः सर्व्वे नानामार्गप्रदर्शकाः ॥ १० ॥
देशकालस्वभावादिभेदात् सर्व्वो निराकुलः ।
तस्माद् देशादिसम्बन्धाद् धर्म्मः सेव्यो नचापरः॥ ११॥
प्रीत्या वा लोभतो वापि विप्लवाद् दण्डतोऽपिवा ।
धर्म्मान्तरसमायोगे पूर्वेष्टचयविच्युतिः ॥ १२ ॥
तदा तद्धर्मिभिः प्रीत्या स सेव्यो विधिचोदितैः ।
यथा यथा विधिर्यादृक् तमुल्लङ्घ्य क्रियावताम्॥ १३॥
पापभावो लोकदृष्टौ जायते यो भयङ्करः ।
समाजाद् बिच्युतं कृत्वा पातयेद् दुःखसागरे ॥ १४॥
सम्यक् संसेवितो धर्म्मो विधिना पुण्यभाजनैः ।
नानासम्पन्मयीं वृद्धिं विदधाति निरन्तरम् ॥ १५ ॥
सदास्वजनसन्तृप्ताः स्वसम्पत्परिकामुकाः ।
सम्पत्तौ वा विपत्तौ वा भवन्ति स्थिरमङ्गलाः ॥ १६॥

धर्म्मपरिवर्त्तनम् ।

य इच्छेद् धर्म्ममार्गाणां विधातुं परिवर्त्तनम् ।
तदैवं नियमं यत्नात् पालयेत् स समाहितः ॥ १ ॥
राजा वा राजपुत्रो वा मुनिर्वा योगसाधनः ।
देशं कालं तथा पात्रं वृत्तिमन्नं विलोकयेत् ॥ २ ॥
विलोक्य सुखतः सेव्यं स्वमार्गे सुखसाधनम् ।
कार्य्यं स्वयं क्रियारक्तो लोकान् सन्तोषयेन्नयात् ॥३॥
खड्गाग्रे वर्त्तते धर्म्मो धर्म्मस्तिष्ठति भक्तिषु ।
भक्तिमार्गे कालसेवा खड्गे तात्कालिकं फलम् ४
स्वाभिप्रेतसुसिद्धार्थं नानातर्कसमन्वितम ।
नानालोभकरैर्युक्तं जनैः शास्त्रं प्रभाषयेत् ॥ ५ ॥
चलितेषु च मार्गेषु युक्त्या दोषान् विलोकयेत् ।
भीषयेत् तोषयेत् कार्य्यं साधयेच्चित्रयेत् सदा ॥६॥
चलितानां महास्थानं धर्म्माणामभिपातयेत् ।
निवन्धान् नाशयेत् तत्र सक्तान् संत्रासयेत् सदा ॥७॥
तत्राम्नानां समापत्तिं ह्रासयेन्नयवर्त्मना ।
स्वमार्गे वर्द्धयेत् प्रीतिं दानैर्मानैः सुभाषणैः ॥ ८ ॥
स्वसम्वद्धोत्सवादीनां स्थानं नाना प्रकल्पयेत् ।
काले काले महोत्साहं देशे देशे प्रसाधयेत् ॥ ९ ॥
स्वमार्गनिरतैर्धीरैरन्नपानादिरञ्जितैः ।
सदा संसाधयेत् कार्य्यं स्वजनान् प्रीणयेत् सुखैः १०

एवं क्रमेण कालेषु प्रीत्या भीत्या च लोभतः।
सेवितः क्रमयोगेन धर्म्मो मार्गं समाचरेत् ॥ ११ ॥
यावत् प्राचीनसंसर्गी तिष्ठेत् तावत् शनैः शनैः।
तेषामभावे तारुण्यं लब्ध्वा लोकान् प्रसारयेत् ॥१२॥
यद्दशे बहवो लोकास्तमादौ वशयेत् सुधीः।
तद्दशे सकला वश्या भवेयुस्तस्य सेवकाः ॥ १३ ॥
अन्यथेयं धरादेवी अनन्ताऽनन्तमानवा।
प्रत्येकं युक्तिमार्गेण वशयेत् कश्चिरादपि ॥ १४ ॥
शतानिष्टस्य सम्प्राप्ति नोद्विजेद् धर्म्मचालकः।
प्राणानप्युज्झितुं शक्तो भूयाद् धर्म्मस्य साधने ॥१५॥
यथैवासीत् तथैवास्तु लोकोऽसौ भवसागरे।
चरमे का गतिश्चेति देवो जानाति नापरः ॥ १६ ॥
सर्वेषामेकधर्मित्वं कदाचिन्नैव सिध्यति।
प्रकृतेर्भावयोगेन सृष्टिरेषा सनातनी ॥ १७ ॥
अनन्ता धरणीह्येषा चानन्तजनसङ्कुला।
सर्वेषामेकभावत्वं कथं केन प्रसाध्यते ॥ १८ ॥
किन्तु सञ्चालको देवो भूत्वा सर्व्वाभिपूजितः।
स्वजनान् देवसाम्राज्ये शक्तो योजयितुं भवेत् ॥१९॥
एवं यदा यथा देवी प्रकृतिः परिणामिनी।
तदा तथा भवेद्भावस्तथैवायोजनं नृणाम् ॥ २० ॥

यो यथा साधनैर्युक्तस्तथा कार्य्यं प्रसाधयेत् ।
न्यूने न्यूनोऽखिले पूर्णो गतिरेषा सनातनी ॥ २१ ॥
कदा कश्चिद् भवेद् श्रेष्ठः कदा पतति पातके ।
नानारूपधरा शक्तिः सदा नृत्यति देहिषु ॥ २२ ॥
यदा यो वर्द्धते धर्म्मो यत्र स सेव्यतां तदा ।
प्रकृतेः परिणामोऽयमवार्य्यो यत्नसञ्चयैः ॥ २३ ॥
स एव शुभदः पुंसामिहचामुत्र कर्मिणाम् ।
अवज्ञानान्महापापे मज्जन्ति स्वजनैः सह ॥ २४ ॥

मण्डमेलनम् ।

कार्य्यिकं सैविकं चैव वैद्यिकं मेलनं तथा ।
आद्ये आधीन्यसंयुक्ते परं स्वाधीनतास्पदम् ॥ १ ॥
यन्मेलने भवेदिच्छा तत्कार्य्ये विनियोजितः ।
स्वकापट्येन संसिद्धिं कुर्य्यादस्वार्थतत्परः ॥ २ ॥
अथवा स्वधनेनैव तमुद्दिश्य सुकर्मणाम् ।
साधकस्तं वशीकुर्य्यादेष मार्गो धनाश्रितः ॥ ३ ॥
सैविकं सेवया नित्यं बुद्धियोगेन साध्यते ।
स्वाधिकारमनुल्लङ्घ्य प्रभोरिष्टप्रसाधकम् ॥ ४ ॥
चिरेण सकला ह्येषा नृणां सिद्धिः प्रसीदति ।
अत्यापदि द्रुतं दद्यात् फलं कार्य्यप्रसाधनम् ॥ ५ ॥
यत्र ये तोषमायान्ति द्वेषं यान्त्यथवा पुनः ।
इष्टसिद्ध्या द्विष्टनाशो मेलयेदुपदेशकम् ॥ ६ ॥

एकोऽपि वचसा तुष्टिं बहुकालात् प्रपद्यते ।
सहसा कस्यचिद्वाक्यं न कश्चिच्छ्रोतुमर्हति ॥ ७ ॥
यो यादृशैर्जनैरिच्छेन्मेलनं सहसा बुधः ।
तेषां भावं समादाय फलहेतू विलोकयेत् ॥ ८ ॥
ततस्तत्पोषकैस्तत्त्वैः स्वबोधस्यानुगामुकः ।
निबन्धं रचयंस्तस्मै दत्त्वा सम्मेलयेद् बलात् ॥ ९ ॥
यो यस्य जनयेत् प्रीतिं येन केनापि कर्म्मणा ।
स बलात् तेन कार्य्येण तमिच्छति न संशयः ॥१०॥
राजानो वा महासत्त्वा दीना वा दस्यवस्तथा ।
सर्व्वे स्वार्थं समालोक्य द्विष्टा वाऽनुगता मताः॥११॥
सर्वत्र स्वानुगान् पश्येत् स्वकार्य्यपरिपोषकान् ।
श्रेयसि विरलं मित्रं बहुविघ्नं पदे पदे ॥ १२ ॥
सहसा न फलं वाञ्छेत् कालयोगमपेक्षयेत् ।
न कश्चित् कस्यचित् स्वार्थं सहसा दातुमिच्छति॥१३॥
अर्थेन सेवया वाचा यो यं काले ऽभिभावयेत् ।
स तस्य वशमायाति मुनिर्वा धरणीपतिः ॥ १४ ॥

वस्तुविवादः ।

एकत्र विषये सक्ताः क्रमाद् यौवनमाश्रिताः ।
स्वार्थदर्शनसम्मत्ता विवदन्ते परस्परम् ॥ १ ॥
दर्शने भोजने यावत् प्रीतिमात्रं शरीरिणाम् ।
न तावद् द्वेषगन्धोऽस्ति प्राप्ते भोगे विपत्तयः ॥ २ ॥

यावदर्थस्य सम्प्राप्तिस्तावद् भोगो विवर्द्धते ।
तदभावे भोगहानिर्यतो विद्वेषसम्भवः ॥ ३ ॥
एकत्र समवेतानां बुभुक्षूणां परस्परम् ।
यो बली सोऽर्थसंग्राही तदन्यो द्वेषवान् भवेत् ॥४॥
विशेषतः स्त्रियो मूलं विवादस्य शरीरिणाम् ।
स्वान्यौन्नत्यं दर्शयन्त्यो जनयन्ति परिच्छिदम् ॥ ५ ॥
स्वभोगसाधने पुंसां स्वभावात् प्रीतिसम्भवः ।
स्वभोगसाधना लोके दारभृत्यसुतादयः ॥ ६ ॥
स्वजने कृतसम्प्रीतिस्तत्पोषणसमुत्सुकः ।
इच्छेद् वञ्चनमन्यस्य सर्वेषां वृत्तिरीदृशी ॥ ७ ॥
ततः सम्प्राप्तवयसां दायभागः शुभावहः ।
अन्यथा द्वेषदावाग्निः सर्वं दहति निश्चितम् ॥ ८ ॥
भोगसंसक्तचित्तानां मूर्खाणां लब्धसम्पदाम् ।
प्रायशो जायते वैरं स्वश्रेष्ठपरिलोकनात् ॥ ९ ॥
धनभागो धनाढ्यानां दारिद्र्यस्य निबन्धनम् ।
तस्माद् यत्नेन संरक्ष्यं धनं न्याय्येन वर्त्मना ॥ १० ॥
सततं स्वजनैः सङ्गो बाल्याद्विद्यासमर्ज्जनम् ।
विलोक्य विषयाभोगान्निवृत्तिरतिसङ्गता ॥ ११ ॥
वर्त्तनं धर्म्ममार्गेण भागयोगेन सेवनम् ।
रक्षणं सर्वधर्म्मार्थं धनस्य परिवर्द्धनम् ॥ १२ ॥

आपत्काले समा चेष्टा दुष्टानां ताड़नं सदा ।
भक्तिवात्सल्यसम्बन्धो बान्धवानां यथायथम् ॥ १३ ॥
सर्वैः कल्पितमार्गाणां न कदाचिद् विनाशनम् ।
एत एव महोपाया विवादाद् धनरक्षणे ॥ १४ ॥
दुर्लभा ह्यस्य सम्प्राप्तिः कदाचित् केन लभ्यते ।
तस्माद् रक्ष्यं प्रयत्नेन धनं सर्वेष्टसाधनम् ॥ १५ ॥

इति श्रीकाशीश्वरशरणकाशीधर्म्मसभाध्यक्ष-
वाशिष्ठसर्वदर्शनाचार्य्यश्रीताराचरणशर्म्मप्रणीता-
नीतिदीपिका समाप्ता ।

# शुद्धिपत्रम ।

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | १७ | त्यज्य | त्याज्य |
| १८ | ११ | संसिध्यै | संसिद्धै |
| २२ | १५ | संगहः | संग्रहः |
| २३ | ८ | नाचेरं | नचिरं |
| २७ | ३ | लोभापरा | लोभपरा |
| ,, | १८ | वृथाय्या | वृथाख्या |
| २८ | १३ | देवाना | देयाना |
| ३१ | १६ | धर्म्मो | धर्म्मो |
| ३६ | ४ | शास्ते | शास्त्र |
| ,, | १५ | उत्कोचग्रहण | उत्कोचाग्रहणं |
| ३८ | १६ | किर्त्ति | कीर्त्ति |
| ४० | १३ | अयमेव | अयमेव |
| ४५ | १४ | चक्रेषु | चक्रेषु |
| ४७ | १२ | शाङ्किताः | शङ्किताः |
| ,, | १४ | निःशाथ्यं | निःशाठ्यं |
| ४८ | २ | सम्भमजन्ते | सम्भजन्ते |
| ,, | १२ | शाथ्ये | शाठ्ये |
| ४८ | १६ | भाषिता | भाविताः |
| ५१ | ३ | रोधादिना | बोधादिना |

| | | | |
|---|---|---|---|
| ५३ | २२ | तत्व | तत्त्व |
| ५४ | ४ | तत्वा | तत्त्वा |
| ६४ | २१ | संमता | संसता |
| ६५ | ४ | सत्वा | सत्त्वा |
| ,, | ८ | सत्वो | सत्त्वो |
| ,, | १० | सत्व | सत्त्व |
| ६५ | १८ | भक्त्या | भँक्त्या |
| ७६ | २ | याथ्यं | याठ्यं |
| ७७ | २ | स्तत्व | स्तत्त्व |
| ७७ | १६ | समरोत्सका: | समरोत्सुका: |
| ८७ | ८ | ख्याता | ख्यातो |
| ८९ | १७ | सलयन् | न्कलयन् |
| ९२ | १० | कर्त्तव्या | कर्त्तव्य: |
| ९३ | १५ | न्क्षित्त्वा | न्क्षित्त्वा |
| ९७ | २ | करगता | करगतस् |
| ११२ | १२ | समीपात् | समीयात् |
| ,, | १४ | धर्म्मौं | धर्म्मौ |
| १२३ | ११ | रच्छला: | रचच्छला: |
| १२४ | ५ | साधरणी | साधारणी |
| १२५ | १३ | सन्ध्यात् | सान्ध्यात् |
| १२७ | २० | एकाचराधे | एकापराधे |
| ,, | २० | दास: | दाप्य: |
| १२८ | ५ | विजानीषु: | विजानीयु: |

| | | | |
|---|---|---|---|
| ,, | ६ | कठिना | कठिनः |
| ,, | ७ | कारिकामुका | परिकामुकाः |
| ,, | २१ | प्रजाक्षेममरै | प्रजाः क्षेममयैः |
| १४४ | १० | जायते | जायेते |
| १४६ | १७ | भूमे | भूमेः |
| १४८ | १८ | शकोपि शत्रुर्भेतव्यः | शत्रोर्भेतव्यमेकस्मात् |
| ,, | ,, | सहस्ते | सहस्त्रे |
| १४९ | १० | कदाचनः | कदाचन |
| १५४ | ६ | सर्व्वा | सर्व्वं |
| १५६ | ३ | शठन पापनिष्टे | शठेन पापनिष्ठे |
| १६६ | १२ | स्वामभवान्मताम् | स्वाभिभवान्मता |
| १७२ | १२ | मन्त्रीं | मन्त्रां |
| १७३ | ११ | समाश्रतेत् | समाश्रयेत् |
| १७९ | १५ | मिलने | मेलने |
| १८६ | २१ | सम्यर्कि | सम्पर्कि |
| १९० | १२ | समेच्चणः | समेच्चणाः |
| ,, | १५ | स्तादक् | स्तादृक् |
| १९१ | ३ | सौलभ्यं | सौलभ्यं |
| १९५ | १९ | वासांसि | वासांस |
| १९७ | ८ | स्वभादि | स्वभावादि |
| २०१ | १० | शरीरिणम् | शरीरिणाम् |
| २०२ | १० | रौदयी | रौद्रयी |

—●●●—